त पो जपो यज्ञमुखा क्रिया या
क चित्प्रमादाद्विकला यदि स्यात् ॥
[illegible] नामसंकीर्तनतः सुपूर्णा
त्रि दशभवेत्त्वां तमजं गृणामि ॥ ९ ॥

का लो मृकण्डात्मजमर्कचन्द्रमो-
ग्नि नेत्र नेतुं समुपागतस्तदा ॥
का लान्तकागस्त्य शिवेत्यहो तदा
हा पशुपतेस्त्वं तमु मुक्तवानसि ॥ १० ॥
य स्मै सदृग्नमञ्चके नारायण जासुरः ॥
का मपूर्तिस्तयोवशीरसंपदेवधियोऽधिका ॥ ११ ॥

ला भोपयो नश्वर एव कामोऽ
प्ति यद्घृतेनेश न कामभोगैः ॥
रु द्रोऽप्रशाम्यत्स्त एव देहि
द्रा क् शांतिदां त्वय्यचला सुभक्तिम् ॥ १२ ॥
य त्वं विना दुःखमुपैति यद्वत्
नी रागमप्येति सुखं च तद्वत् ॥
ल घुं यते तव गृणोमि चार्य
कं चित्त्वयीशार्पय भक्तिमेकाम् ॥ १३ ॥

ठा ये विद्या यानपि भक्तियोगो
य थानुगृह्णाति तथा परो नो ॥
स र्वेऽपि यस्मादिह पावनाः स्यु
र्वे दाः प्रमाणं त्विह संशयो नो ॥ १४ ॥

श्व पाकमुख्या अपि यस्य भक्त्या
[illegible] जन्व ईशान तवैव लोके ॥

य होश चण्डालमुतापि याता
स तां गतिं विश्रुतमेतदस्ति ॥ १५ ॥
दा रात्मजागारधनादि सर्वं
शि वेह संन्यस्य सदा भजन्ति ॥
चा मे परं त्वां मुहुरत्र ते किं
य मीश मृत्यूद्भवदुःखभाजः ॥ १६ ॥
श्री कंठ सूर्येन्दुपयोनभोमि-
म रुद्रात्मान इमास्तनूस्ते ॥
हा लाहलादानिशमानतोऽस्मि
ये चाधिदेवेश्वर मे प्रसीद ॥ १७ ॥
वा लाशनोपवीतो
य व पंचास्यत्रिलोचनो नमः ॥
न न्दिगतो दशहस्तो
मः केरव स पातु सुन्मनः ॥ १८ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीशंकरस्तोत्रं संपूर्णम् ॥

---

## २१ प्रार्थनास्तोत्रम् ॥

शंकर सुखाकर गुरो परमदेव । देहि मयि तेदश शरीरसकदेव ॥
किङ्करवरामरतरो परमदेव । पान लवमद्य गतरोष जितदेव ॥ ध्रु ॥ १ ॥
पूर्णकरुणाञ्चितकटाक्षवरदृष्टया । तापशमनं कुरु ममार्य वरदृष्टया ॥
नैव तव विघ्नवि नमःसदनुशिष्टया । ज्ञातमिदमर्थितमिदेदमपि दिष्टया॥२॥
कर्मभिरपारभववारिधिनिरस्तं । कामसुखघोरमकरार्तमपशस्तम् ॥
जन्ममुखवीचिभिरितस्ततं उदस्तं त्रस्तमिम उद्धर गृहाण मम हस्तम्॥३॥

ग्रस्तशरणार्थिकरुणोत्कमपि किं ते । न श्रुतमपांदृश उपेक्ष्य इह किं ते ॥
उद्धरणमस्य करुणाकर क्रियत्ते । ऽथापि न मनो द्रवति कोमलमहो ते ॥ ४ ॥

प्रसीद मे सागस आर्तबन्धो । कारुण्यसिन्धोऽनुपमास्तबन्धो ॥
बन्धो मृषापि व्यथयत्ययं मां । स्वप्नोपमं छिन्ध्यरं सर्वतो माम् ॥५॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
प्रार्थनास्तोत्रं संपूर्णम् ॥

---

## २२ दृत्यर्थिरामेश्वरस्तोत्रम्

भागीरथीपुण्यजलाभिषिक्तो यो ब्रह्महत्याद्यघतः पुनाति ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ १ ॥
यद्दर्शनं कायिकवाचिकादिपापापहं तापहरं वरं च ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ २ ॥
त्रिकालसंदर्शनतोऽपि तुष्टो ददाति सिद्धीरभयीर्महा मा ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ ३ ॥
रुद्राभिषेकप्रिय ईश्वरो यः सर्वार्थदो भाविकृकामपूरः ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ ४ ॥
यो निर्गपत्रैस्त्रिदलैर्मवारि- संपूजितो यच्छति भुक्तिमुक्ती ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ ५ ॥
संपूजितो योप्यजित- प्रदोषे ददाति मुक्तिं सकलाधिशान्तिम् ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ ६ ॥
यः शुद्धचित्तेन हि संस्मृतोऽजो भवत्यरं भक्तजितो जितारिः ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ ७ ॥

न ज्ञायते वाङ्मनसातिदूरो देवादिभिर्यन्महिमानियत्तः ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ ८ ॥

रामेश्वराष्टकमिदं सुखदं विखेदं तापत्रयोपशमदं मदमत्सरादम् ॥
भक्तेष्टदं जननमृत्युगदागदं यो भक्त्या पठेत्स परमं पदमेति शंभोः ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं भरताख्यद्विज-स्थापितरामेश्वरस्तोत्रं संपूर्णम् ।

## २३ व्यर्थिपडाननस्तोत्रम् ॥

दक्षेण हस्तेन गदां दधानः क्रौंचघ्न वामेन सुसावधानः ॥
स शुक्रजो वोऽवतु कार्तिकेयः षाण्मातुरः साम्बसुतोऽयजेयः॥१॥

षट्शिरो द्वादशकरो द्विगुणोत्रिज एव किं ॥
सोऽबाहुतो द्विहस्तोऽत्र सुब्रह्मण्यो मयेक्षितः ॥ २ ॥

हत्वा बलात्संपदमान्यदैवीं पुष्णाति गोपायति वैश्वदैवीम् ॥
सुपूजितस्त्वं सुमनःस्वमरूगतं नमस्तेऽस्तु सदा विरक्तम् ॥ ३ ॥

विशेषतस्त्वां भुवि दाक्षिणात्या भजन्ति भक्त्या परयाज तेषाम् ॥
अनुग्रहार्थं द्विभुजस्वरूपं प्रकाश्य चास्से दिशि दक्षिणस्याम् ॥४॥

स्त्रीसंगतिर्दुर्गतिरेव साक्षादित्थं समाख्यापयितुं वधूनाम् ॥
सुस्पर्शगन्धोऽपि सुदूरतस्ते समुज्झितो देव पदे नमस्ते ॥ ५ ॥

स्वामिन्त्वंबास्नेहलतां विततामपि तां क्षणात् ॥
मायामयीं निरस्याऽजो विजहार नमामि तम् ॥ ६ ॥

एकान्तसेवितमपि स्वामिनं त्वोपतस्थिरे ॥
एकान्तभक्ता यच्चित्ते नैव कामोद्भविः स्थिरे ॥ ७ ॥

स्वामिंस्तारकजित्सर्वलोकत्राणकशक्तिभृक् ॥
शंभुसुत नमस्तेऽस्तु प्रसीद परिपाहि न ॥ ८ ॥
योगापेक्षा मे न ते दर्शनार्थं नापेक्षा मे भाविपुण्योद्भवार्थम् ॥
भक्त्या भूयाद्दर्शनं ते कदापि स्यात्साफल्यं जन्मनो मे ततोऽपि ॥९॥
स्मृर्तृगामी कलौ योऽयातनयो द्विजयो मत ॥
चक्रे ह्यर्थी तस्य नुतिं वासुदेवसरस्वती ॥ १० ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
कार्तिकस्वामीस्तोत्रम् ॥

---

## २४ श्रीशंकराचार्यस्तुतिः

श्रीमद्गुरुवरपूज्यपदेश्वर । वैदिकमार्गस्थापक शंकर ॥
शिवावतार श्रीमच्छंकर । किंकर हरहर त्राहि यतीश्वर ॥ १ ॥
शिवगुरुसद्गृहावतीर्ण मोहान्तक जनशिक्षक तारक शान्त ।
खण्डितपण्डितसंहतिमण्डित । मण्डनपण्डितदुर्मतशान्त ॥
श्रीम० ॥ २ ॥
विजितासुगतशाक्तासंमतसौगतबौद्धादिकराद्धान्त ॥
प्रस्थानत्रयभाष्यकृदद्वयमतसंस्थापक दृढसिद्धान्त ॥ ३ ॥
नृपभूकमठान्यो दिक्षु मठान् । कृत्वा चतुरस्तत्र चतुर ॥
सुरेश्वरादिप्रमुखान् चतुरानयोजयन्यो शिष्यांश्चतुर ॥ ४ ॥
श्रीमत्परमहंसपरिव्राजकश्रीमच्छंकराचार्यमशोक ॥
वासुदेवयतिर्भक्त्या नमति । स्तुत्वा यथामति पावितलोकम् ॥५॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचिता
श्रीशंकराचार्य-स्तुतिः संपूर्णा ।

---

## २५ श्रीखण्डराजस्तोत्रम् ॥

शङ्करावतारोऽयं खण्डराजो महामतिः ।
तस्मै म्हाळसेशाय मणिमल्लारये नमः ॥ १ ॥

ऋषीणां यस्तप सिद्ध्या अवतीर्य महीतले ।
दैत्याननाशयत्तस्मै मणिमल्लारये नमः ॥ २ ॥

यो वेदमयमास्थाय महाश्वमपराजितम् ।
जघ्ने दैत्यरिपुन्तस्मै मणिमल्लारये नमः ॥ ३ ॥

पीतवस्त्रपरीधानः पीताभरणभूषितः ।
त्रैलोक्यवन्दितस्तस्मै मणिमल्लारये नमः ॥ ४ ॥

मार्गशीर्षे महामासे प्रत्यब्दं यन्महोत्सवः ।
योऽभीष्टदो विभुस्तस्मै मणिमल्लारये नमः ॥ ५ ॥

देवः प्रतापमार्तण्डभैरवः शत्रुकृन्तनः ।
सर्वापत्तिहरस्तस्मै मणिमल्लारये नमः ॥ ६ ॥

खण्डराज प्रसीद त्वं सर्वापत्तिमपाकुरु ।
पाहि मां त्वं प्रभो तुभ्यं मणिमल्लारये नमः ॥ ७ ॥

कायेन मनसा वाचा येऽपराधा मया कृताः ।
तान्क्षमस्व प्रभो तुभ्यं मणिमल्लारये नमः ॥ ८ ॥

खण्डराजस्तुतिमिमां त्रिसंध्यं यः पठेद्द्विजः ।
सर्वान्कामान्स आप्त्वेह शिवलोके महीयते ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीखण्डराजस्तोत्रं संपूर्णम् ।

## २६ श्रीचिदम्बरदीक्षितस्तोत्रम् ॥

शि यः स्वयं भूमितलेऽवतीर्णः स्वयं हि धर्मः खलु येन चीर्णः ॥
व शी द्विभार्योऽप्यभवद्विदीर्णरागो यदिष्टैस्तु भवोऽपि तीर्णः ॥१॥
चि दंबराख्यो भुवि दीक्षितो यः सदाज्यतासादितसिंधुतोयः ॥
बं भादिहीनान्भजतान्नपन्नानतारयद्वै विपदो विपन्नान् ॥ २ ॥
ष भूव यो लौकिककर्मकर्ता भर्ता द्विजानां खलगर्वहर्ता ॥
र रक्ष धर्मं स हरावतारो मलापहृत्तीर्थविहारधुर्यः ॥ ३ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीचिदम्बरदीक्षितस्तोत्रम् ॥

---

## २७ श्रीसदाशिवेन्द्रस्तोत्रम्

स्वानन्दरसोन्मत्तः स्वाङ्गं विस्मृत्य यो नरीनर्ति ।
स यतिः सदाशिवेन्द्रो विदेहमुक्तस्थितो यथेवर्ति ॥ १ ॥
सदाशिवाभाषणमन्यवीक्षया सदाशिवाचारमचिन्त्यदीक्षया ।
सदाशिवाभं प्रणमामि सद्गतिं सदाशिवार्येन्द्रसरस्वतीयतिम् ॥२॥
भूत्वा छन्नो जातवेदा इवाष्टभूत्या छन्नो योऽपि चोन्मत्तचेष्टः ॥
काष्ठां कांश्चित् प्राप्य रेमे स्वतन्त्रः काष्ठा काचिद्या विमुक्तेरमंत्रः॥३॥
मुक्त्याश्लिष्टो भाति बाह्यप्रधानः क्ष्मातल्पोऽसौ दिक्पटः सावधानः॥
धात्रि स्वीये योगविद्याग्रवर्ती जूर्तिघ्नो दिक्शालिनी यस्य कीर्तिः॥४॥

नग्नं दृष्ट्वा निजदयितया नोदितो म्लेच्छ एवं
शान्तं दान्तं प्रसभमसिनाऽहन् ततो विव्यथे न ॥
कृत्तांसोऽपि व्यथितमनसे सैनसे शुभ्रबाहुं
मंदाक्रान्तान्वयनगतयेऽदर्शयत् पूर्वं आहुः ॥ ५ ॥

म्लेच्छो विरक्तः शरणं जगाम न्यूनोऽप्यनुग्राह्य वतापि तामसः ॥
इत्थं विचार्यावददे परेन्त्यज श्रद्धत्स्व नित्यं हृदयेप्सितं त्यज ॥ ६ ॥
तथेति कत्राणमपास्य सोऽनमत्तथाचरन् सोऽपि गतिं वतागमत् ॥
यदा कुवंशरथनरोऽप्यगाद्गतिं तदा सुवंशस्य इयान्न किं गतिम् ॥७॥
ईदृक्प्रभावोऽथ सदाशिवेन्द्रो जागर्त्यतोऽद्यापि शिवोऽप्युपेन्द्रः ॥
विशुद्धसत्वं ननु भूतिकाम आत्मज्ञमर्चेत्तमु मुक्तिकामः ॥ ८ ॥
नामादिभ्यः परतरं भूमानं यो निरंतरम् ॥
अभेदेनाप स ब्रह्म न ब्रह्मज्ञः श्रुतीरणात् ॥ ९ ॥
गुरोरपीहोत्तमभुक्तिकाष्ठां गतस्ततोऽत्रास्य जनः प्रतिष्ठाम् ॥
चक्रे वदेत्तं किमु वासुदेवः आत्मज्ञमित्यादतसाधुभावः ॥ १० ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीसदाशिवेन्द्रस्तोत्रं संपूर्णम् ॥

---

## २८ अमरेश्वरस्तोत्रम् ॥

कृष्णावेणीतटावास कृष्णाहृत्तुष्टमानस ॥
त्रासहारिमहावीर त्राहि माममरेश्वर ॥ १ ॥
आन्ध्रदेशकृतावास चान्तरक्षमहारस ॥
दुःसाध्यमहाशक्तिधर त्राहि माममरेश्वर ॥ २ ॥
श्रीधान्यघाटिकाक्षेत्ररंजनानर्घ्यरंजन ॥
जननान्तत्रासहर त्राहि माममरेश्वर ॥ ३ ॥
नानोत्पातप्रशमन मनःशान्तिदचिन्तन ॥
अधिष्ठितामरपुर त्राहि माममरेश्वर ॥ ४ ॥
चामुण्डाशक्तिसहित पराजितनिजाहित ॥
हितकारिन् महावीर त्राहि माममरेश्वर ॥ ५ ॥

प्रणवेशादिभिः पंचलिंगैस्त्वां सहितं न च ॥
पश्यन्तं मीरहर त्राहि माममरेश्वर ॥ ६ ॥
अमरावत्यधिष्ठानममरारिनिषूदनम् ॥
वन्दे त्वामखिलाधार त्राहि माममरेश्वर ॥ ७ ॥
सदा ममास्तु योगस्ते त्वदर्थे मेपि सद्भवे ॥
देहोऽयं तिष्ठतु हर त्राहि माममरेश्वर ॥ ८ ॥
प्रसीद पार्वतीजाने न जानेहं शुभाशुभम् ॥
स्मरामि त्वां स्मरहरे त्राहि माममरेश्वर ॥ ९ ॥
अपराधान्मानसिकान्कायिकानपि वाचिकान् ॥
क्षमस्व स्वजनाधार त्राहि माममरेश्वर ॥ १० ॥
दोषा अशेषा मम ये ते नश्यन्तु सदाऽभये ॥
त्वय्यस्तु हृदयं तार त्राहि माममरेश्वर ॥ ११ ॥

इति श्रीमदमरेश्वरस्तोत्रं संपूर्णम् ॥

---

## २९ धान्यवाडिकाक्षेत्रमाहात्म्यम् ॥

देशे महाराष्ट्रसमाह्वये भुवि ख्याता यथा श्रीनरसिंहवाटिका ।
कृष्णानदीपश्चिमकूल आन्ध्रके देशे तथा पूरुपि धान्यवाडिका ॥ १ ॥
दिवि यथाप्यमरास्त्यमरावती भुवि तथा ह्यपराप्यमरावती ।
दिवि तु साप्यमरेश्वरमण्डिता भुवि तथाप्यमरेश्वरमण्डिता ॥ २ ॥
चामुण्डिकेशार्पितसाधुमानं काशीसमानं भुवि भासमानम् ।
क्षेत्रं त्विदं पातकशोकहन्तृ श्रीकृष्णया मण्डितमिष्टदातृ ॥ ३ ॥
कृष्णोत्तुंगतरंगसंगतशतो वातोऽतिपूतो यतो
धावन्त्यान्त इतस्ततः स्वगतितः प्राप्तं त्रिधा दुष्कृतम् ।

दूरादेव निशारयत्यविरतं जातं यदंगादिव-
स्तद्धरस्यात्र सतां सदा निवसतां पापस्य वार्ता कुतः ॥४॥
भक्तेष्टदोऽत्र प्रणवेश्वरः स्थितः श्रीमानगस्त्येश्वर इष्टदः स्थितः ।
सोमेश्वरो यत्र च कोसलेश्वरः श्रीवीरभद्रेश्वर आस्तिकादरः ॥ ५ ॥
लिंगैर्युतं पंचभिरेवमुग्रमुचंडकालान्तकमाशु यत्र ।
सकृत्प्रणामात्सकलार्थदात् तदामरं लिंगमनिष्टहन्तु ॥ ६ ॥
यद्वेणुनादश्रवणाच्चेतनाः सचेतनाः स्युः सजवास्तथाजनाः ।
क्षेत्रं स्थिरं तेन सदास्त्यधिष्ठितं गोपालकृष्णेन ददात्यभीप्सितम् ॥७॥
भूतेश पाहि भवतारक तारकत्र
तातेशवः परमुदर्पकदर्पकत्र ।
कोऽस्माकमत्रभवतो भवतोऽपदोऽन्यो
मान्यो विपत्तिवनपावकपावकाक्ष ॥ ८ ॥
चामुण्डेश सगोपालपालकोऽस्यमरेश्वर ।
लोकशोकहर श्लोकाष्टकं शृणु महेश्वर ॥ ९ ॥

---

## ३० वरदानदीतटीरस्थमधुकेश्वरस्तुतिः

वरदानपरा मनोहरा वरदाविग्रहरा सदादरा ।
वरदाख्यनदी विशुद्धये वरदा मेऽस्त्वपि मुक्तिसिद्धये ॥ १ ॥
कृष्णासरसी या सह तुंगभद्रया कृष्णां गता कृष्णावनुं सुभद्रया ।
सैषा धुनीयं वरदाऽऽह्वयाभया भयानकात्पातु रिपोरघाऽऽह्वयात् ॥ २ ॥
यत्तीरे विहिताः संबाध्य मुनिभिः प्राचीर्वासिष्ठादिभि-
र्यन्नीक्षणतोऽप्यशुद्धमतिभिर्लभ्या गतिः पापिभिः ।
सेयं सद्गलिताख्ययापि वरदा श्रेयस्तपोवृद्धिदा
मन्दानामपि पारदास्तु वरदा मोदास्पदा नः सदा ॥ ३ ॥

जयन्त्याख्या शुभा तस्या वरीवर्ति तटे पुरी।
जयन्तीह महेन्द्राद्या मधुकेशपुर-सराः ॥ ४ ॥

शक्तिं मधुं हन्तुमदादुमाधवः पुरात्र यस्मै खलु चाद्य माधवः।
संस्थापयामास वसन्पुरः स्वयं लिंगं मनोज्ञन्मधुकेश्वराह्वयम् ॥ ५ ॥

इन्द्रादयः स्वस्वहरित्सु संस्थिता यत्रावताराश्च मधुद्विषः स्थिताः।
शम्भोर्गणाश्चाखिललोकमंगला वामप्रदेशेपि च सर्वमंगला ॥ ६ ॥

प्रत्याह्निका यत्र वरार्चनोत्सवा यानादयो यत्र च मासिकोत्सवाः।
चैत्रे रथाद्या अपि वार्षिकोत्सवा भवन्ति चोर्जे वरदीपकोत्सवाः ॥७॥

एवंभूतो महादेवो नाम्ना यो मधुकेश्वरः।
त्रिकालमर्चितो भक्तानभीष्टार्थं प्रयच्छति ॥ ८ ॥

(गोमूत्रिकाबंधः) भवो मारहरः सोमप्रियोवतु सुरावहा।
शिवो वरकरः सामगेयो जन्तुदरापहा ॥ ९ ॥

(हारबंधः) हर सुरवर भो समस्तमघं मम
स्मरहर हर मामव प्रवरावर।
वरकर गरलाद शर्वशमीश शं-
करधरवर जडजद्विजभूजय ॥ १० ॥

---

## ३१ ग्रनरप्रगादवर्णनम् ॥

गीतिः

विभूतिमत्रैत्र्यहमर्पयन् चिताविभूतिमाप्स्वैकदिने स नोचितम्।
गात्रार्धभस्म प्रददौ धनंजयन्छात्रस्तदाभूद्वरदः पुरंजयः ॥ १ ॥

शंकरभजनं संसृतिभंजनं किंकररंजनं मायातमोंजनम् ॥ ध्रु. ॥
भाविकजीवनं पावनपावनं आर्तपरावनं शान्तिमहावनम् ॥ १ ॥
मत्वा धनंजयभूपानुशासनं शवरोप्यकरोल्लिंगसमर्चनम् ॥ २ ॥

नवचितिभूतिं शबरोनुदिनं भूतिवराधाददनुसवनम् ॥ ३ ॥
एकदिने स काप्यलमत्र भस्म स प्रैच्छच्छबरो निधनम् ॥ ४ ॥
आह तदा स्त्रीः कुरु सदनेन सहदयितार्धस्ववपुर्दहनम् ॥ ५ ॥
स तथा दग्ध्वा भसितेन तेन शंकरपूजनमकरोद्दीनः ॥ ६ ॥
आव्हयदंगनामर्चनावसाने ईशस्तुष्टोदर्शयदंगनाम् ॥ ७ ॥
प्रादुर्भूत्वा स्वयमीशानस्ताभ्यां प्रददौ स निजस्थानम् ॥ ८ ॥
यस्य न मानं तव महिमानं तमजानुदिनं स्मरामि नूनम् ॥ ९ ॥
श्रद्धा भक्तिर्मे न नतेर्चनं जाने क्षमस्वापराधमीशान ॥ १० ॥
इति वासुदेवानन्दसरस्वतीयतिकृतविनतिं शृण्वीशान ॥ ११ ॥

इति शिवः

---

# विष्णुस्तोत्राणि

## ३१ लक्ष्मीनारायणस्तोत्रम् ॥

श्रीनिवास जगन्नाथ श्रीहरे भक्तवत्सल ।
लक्ष्मीपते नमस्तुभ्यं त्राहि मां भवसागरात् ॥ १ ॥
राधारमण गोविंद भक्तकामप्रपूरक ।
नारायण नमस्तुभ्यं त्राहि मां भवसागरात् ॥ २ ॥
दामोदर महोदार सर्वापत्तिनिवारण ।
हृषीकेश नमस्तुभ्यं त्राहि मां भवसागरात् ॥ ३ ॥
गरुडध्वज वैकुंठनिवासिन्केशवाच्युत ।
जनार्दन नमस्तुभ्यं त्राहि मां भवसागरात् ॥ ४ ॥
शंखचक्रगदापद्मधर श्रीवत्सलांछन ।
मेघश्याम नमस्तुभ्यं त्राहि मां भवसागरात् ॥ ५ ॥

प्रसीद मे केशव दीनबंधो प्रसीद मे केशव चार्तबंधो ॥
बंधोच्छिदार्योऽसि कृपासमुद्रः स केशवोत्र प्रथितोस्त्युपेंद्रः ॥ ८ ॥
एवं स्तुतोऽष्टभिर्हृद्यैः पद्यैः पातु न आर्तिहा ॥
महात्मा वासुदेवेन यतिनास्तु भवार्तिहा ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
केशवराजाष्टकं संपूर्णम् ॥

---

## ३४ दशावतारस्तोत्रम् ॥

मत्स्योऽब्धिविहारः पूर्वो ह्यवतारः ॥
जातः श्रुतिहारः पूज्यो मनुधारः ॥ १ ॥
नष्टामरश्रायः कूर्मोऽथ धरायः ॥
गत्वा वहतीश क्ष्मां योऽप्यमृतेशः ॥ २ ॥
भूभृत्स हिरण्याक्षघ्नोऽत्र तृतीयः ॥
भूदार उदारो यज्ञो भजनीयः ॥ ३ ॥
भृत्योक्त्यनुसारी पूर्वोऽसुरवैरी ॥
नाम्नापि नृसिंहः साक्षाच्च नृसिंहः ॥ ४ ॥
यो वामनवेषः सन् पञ्चम एषः ॥
याञ्चोपाधियद्धसेनो बलिरद्धा ॥ ५ ॥
दूराद्क्षयकामः स्याद्भार्गवरामः ॥
क्ष्मादो गुरुदासः षष्ठोऽब्धिनिवासः ॥ ६ ॥
राट् सप्तम आसीद्रामो वनवासी ॥
पित्रुक्त्यनुसारी रक्षोक्षयकारी ॥ ७ ॥
वर्योऽष्टम इष्टः कृष्णो हतदुष्टः ॥
यः षोडशनारीसाहस्रविहारी ॥ ८ ॥

बुद्धो नवमोऽयं विस्तारितमायम् ॥
यं कोऽपि न वेद सोऽप्याहृतिमर्दः ॥ ९ ॥
म्लेच्छक्षयकर्ता कल्की वृषभर्ता ॥
विप्रो भविताऽर्य्यः शूरो दशमोऽर्च्यः ॥ १० ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतिविरचितं
दशावतारस्तोत्रं संपूर्णम् ॥

---

## ३५ दशावतारस्तोत्रपद्यम्

धरणीनौकायितमनुरेकाधीश्वरः स त्वं हासि ॥
शंखासुरहा यो निजमोहाऽघाधिहा स त्वं हासि ॥ १ ॥
शान्तिकमठो मोऽभूत्वमठो योऽशठ स त्वं हासि ॥ २ ॥
यो भूदारेपि समूदारोऽभूदुदारस्त्वं हासि ॥
स्तब्धरोमा भुवदुद्धारे स्तब्धरोमास्त्वं हासि ॥ ३ ॥
नरसिंहतनूर्हृतभक्तजनुः स्वेष्टदः स त्वं हासि ॥
भक्तार्तिहरो दैत्यासुहृयो भीहृदः स त्वं हासि ॥ ४ ॥
यो व्याजपटुर्बलिमार्पबटुश्चामहीत्स त्वं हासि ॥
द्वारि बलेर्यस्तिष्ठत्यभयः कीर्तिकृत्स त्वं हासि ॥ ५ ॥
दुर्नृपहन्ता ब्राह्मणगोप्ता स्वाविता सत्वं हासि ॥
पूरितकामो भार्गवरामो विभ्रमः स त्वं हासि ॥ ६ ॥
सीतारामो भक्तारामो वैरिहृत् स त्वं हासि ॥
एकदारस्त्रीवाग्व्रतमन्त्री रावणारिस्त्वं हासि ॥ ७ ॥
षोडशनारीसहस्रभोगी योगीराट् स त्वं हासि ॥
भूभारहरो हतसंसारो योऽष्टमः स त्वं हासि ॥ ८ ॥

अपापविद्धो युवसंशुद्धो बुद्ध एवस्त्वं ह्यसि ॥
विठ्ठलनाम्ना यः शुभधाम्ना तारकः स त्वं ह्यसि ॥ ९ ॥
कल्किर्भविता दुर्जनहन्ता योऽन्ततः स त्वं ह्यसि ॥
गन्धर्वस्थो द्विभुजः स्वस्थो यो गुरुः स त्वं ह्यसि ॥ १० ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
दशावतारस्तोत्रं संपूर्णम् ॥

---

## ३६ श्रीनरसिंहस्तोत्रम्

जय जय भयहारिन् भक्तचित्ताब्जचारिन्
जय जय नयधारिन्दृप्तमत्तारिमारिन् ॥
जय जय जयशालिन्पाहि नः शूरसिंह
जय जय दययार्द्र त्राहि नः श्रीनृसिंह ॥ १ ॥
असुरसमरधीरस्त्वं महात्मासि जिष्णो
अमरविसरवीरस्त्वं परात्मासि विष्णो ॥
सदयहृदय गोप्ता त्वन्न चान्यो विमोह
जय जय दययार्द्र त्राहि नः श्रीनृसिंह ॥ २ ॥
खरतरनखराग्रं दारिहृत्यै विधत्से
परतरपरहस्ते स्वाननार्यैन धत्से ॥
भयभयभयकर्ता कोऽपरस्तात्स्वयंवाह
जय जय दययार्द्र त्राहि नः श्रीनृसिंह ॥ ३ ॥
असुरकुलकलारिः स्वेष्टचेतस्तमोऽरिः
सकलखलखलारिस्त्वं स्वभक्तारिवैरी ॥
स्वदित स इनदृक् सत्पक्षपाती न चेह
जय जय दययार्द्र त्राहि नः श्रीनृसिंह ॥ ४ ॥

सकलसुरधरारिः प्राणिमात्रापकारी
तव भक्तवरारिर्धर्मविध्वंसकारी ॥
सुरवरवरदृप्तः सोप्यरिस्ते हतो ह
जय जय दययार्द्र त्राहि नः श्रीनृसिंह ॥ ५ ॥

दहनाद्गहहाब्धिपातनाद्गरदानाद्भृगुपातनादपि
निजभक्त इहावितो यथा नरसिंहापि सदाव नस्तथा ॥ ६ ॥
निजभृत्यविभाषितं मितं खलु कर्तुं स्वमृतं दयाकर ॥
प्रकटीकृतमित्थमव्ययो निजरूपं नरसिंह धीधर ॥ ७ ॥

नाराधनं न हवनं न तपो जपो वा
तीर्थे गतं न च कृतं श्रवणादि नो वा ॥
सेवा कुटुंबभरणाय कृतातिदीना
दीनार्तिहन् नरहरेऽघहरे ह नोऽव ॥ ८ ॥

इति श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीनरसिंहस्तोत्रं संपूर्णम् ॥

## ३७ श्रीनृसिंहस्तोत्रम्

वरदानुदिनाविरोधतः सहसा येन महासुरो हतः ॥
निजभृत्यवचस्तथामृतं विहितं तं नृहरिं भजे हितम् ॥ १ ॥

नृत्यंति कर्माभिधे वै नटो जीवा निहंति यः ॥
तत्संबंधमविद्याख्यं नरसिंहः स नोऽवतु ॥ २ ॥

यद्वक्षोवक्त्रहृत्संस्था लक्ष्मीवाक्संविदः सदा ॥
अविरोधितया पायादपायान्नृहरिः स नः ॥ ३ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीनृसिंहस्तोत्रं संपूर्णम् ॥

---

१. निजभृत्यवचस्तथामृतं

## ३८ श्रीनृसिंहाष्टकम्

यं ध्यायसे स क्व तवास्ति देव इत्युक्त ऊचे पितरं सशस्त्रम्।
प्रह्लाद आस्तेऽखिलगो हरिः स लक्ष्मीनृसिंहोऽवतु मां समन्तात्॥१॥
तदा पदाताडयदादिदैत्यः स्तम्भं ततोऽन्हाय घुरूरुशब्दम्।
चकार यो लोकभयंकरं स लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥ २ ॥
स्तम्भं विनिर्भिद्य विनिर्गतो यो भयंकराकार उदस्तमेघः।
जटानिपातैः स च तुङ्गकर्णो लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥३ ॥
पञ्चाननास्यो मनुजाकृतिर्यो भयंकरस्तीक्ष्णनखायुधोऽरिम्।
धृत्वा निजोर्वोर्विददार सोऽसौ लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥४॥
वरप्रदोक्तेरविरोधतोऽरिं जघान भृत्योक्तमृतं हि कुर्वन्।
स्रगान्त्रजां निदधौ स्वकण्ठे लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥५॥
विचित्रदेहोऽपि विचित्रकर्मा विचित्रशक्तिः स च केसरीह।
पापं च तापं विनिवार्य दुःखं लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥६॥

प्रह्लादः कृतकृत्योऽभूद्यत्कृपालेशतोऽमराः।
निष्कण्टकं स्वधामापुः श्रीनृसिंहः स पातु माम् ॥ ७ ॥
दंष्ट्राकरालवदनो रिपूणां भयकृद्भयम्।
इष्टदो हरति स्वस्य वासुदेवः स पातु माम् ॥ ८ ॥

इति श्रीमत्प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीलक्ष्मीनृसिंहाष्टकं समाप्तम्।

---

## ३९ परशुरामस्तोत्रम्

कराभ्यां परशुं चापं दधानं रेणुकात्मजम्।
जामदग्न्यं भजे रामं भार्गवं क्षत्रियान्तकम् ॥ १ ॥

सकलसुरखलारिः प्राणिमात्रापकारी
तव भजकवरारिर्धर्मविध्वंसकारी ॥
सुरवरवरदृप्तः सोप्यरिस्ते हतो ह
जय जय दययार्द्रे त्राहि नः श्रीनृसिंह ॥ ५ ॥

दहनाद्दहहाब्धिपातनाद्गरदानाद्भृगुपातनादपि
निजभक्त इहाश्रितो यथा नरसिंहाप्यि सदाव नस्तथा ॥ ६ ॥

- निजभृत्यविभाषितं मितं खलु कर्तुं त्वमृतं दयाकर ॥
प्रकटीकृतभिम्भमध्यतो निजरूपं नरसिंह धीश्वर ॥ ७ ॥

नाराधनं न हवनं न तपो जपो वा
तीर्थे व्रतं न च कृतं श्रवणादि नो वा ॥
सेवा कुटुंबभरणाय कृतातिदीना
दीनार्तिहन्नरहरेऽपहरे ह नोऽव ॥ ८ ॥

इति श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीनरसिंहस्तोत्र संपूर्णम् ॥

## २७ श्रीनृसिंहस्तोत्रम्

वरदानुदिशाविरोधतः सहसा येन महासुरो हत ॥
निजभृत्यवचस्तथामृतं विहितं सं नृहरिं भजे हितम् ॥ १ ॥

नृत्यंति कर्मभिर्ये ते नयो जीया निहंति यः ॥
तत्संबंधमविद्याख्यं नरसिंहः स नोऽवतु ॥ २ ॥

यदुरोवक्त्रहृत्संस्था लक्ष्मीवाक्संविदः सदा ॥
अविरोधितया पायादपायान्नृहरिः स नः ॥ ३ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचित
श्रीनृसिंहस्तोत्र संपूर्णम् ॥

---

१. निजभृत्यवचस्तथामृतं

## ३८ श्रीनृसिंहाष्टकम्

यं ध्यायसे स क्व तवास्ति देव इत्युक्त ऊचे पितरं सशस्त्रम् ।
प्रह्लाद आस्तेऽखिलगो हरिःस लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥ १॥
तदा पदाताडयदादिदैत्यः स्तंभं ततोन्हाय घुरूरुशब्दम् ।
चकार यो लोकभयंकरं स लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥ २ ॥
स्तम्भं विनिर्भिद्य विनिर्गतो यो भयंकराकार उदस्तमेघः ।
जटानिपातैः स च तुंगकर्णो लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥३ ॥
पंचाननास्यो मनुजाकृतिर्यो भयंकरस्तीक्ष्णनखायुधोऽरिम् ।
धृत्वा निजोर्वोर्विददार सोऽसौ लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥४॥
वरप्रदोक्तेरविरोधतोऽरिं जघान भृत्योक्तमृतं हि कुर्वन् ।
भागवतं तं निदधौ स्वकण्ठे लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥५॥
विचित्रदेहोपि विचित्रकर्मा विचित्रशक्तिः स च केसरीह ।
पापं च तापं विनिवार्य दुःखं लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥६॥

प्रल्हादः कृतकृत्योऽभूद्यत्कृपालेशतोऽमराः ।
निष्कण्टकं स्वधामापुः श्रीनृसिंहः स पातु माम् ॥ ७ ॥
दंष्ट्राकरालवदनो रिपूणां भयकृद्भयम् ।
इष्टदो हरति स्वस्य वासुदेवः स पातु माम् ॥ ८ ॥

इति श्रीमत्प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीलक्ष्मीनृसिंहाष्टकं समाप्तम् ।

---

## ३९. परशुरामस्तोत्रम्

कराभ्यां परशुं चापं दधानं रेणुकात्मजम् ।
जामदग्न्यं भजे रामं भार्गवं क्षत्रियान्तकम् ॥ १ ॥

नमामि भार्गवं रामं रेणुकाचित्तनन्दनम् ।
मोचिताम्बार्तिमुत्पातनाशनं क्षत्रनाशनम् ॥ २ ॥
भयार्तस्वजनत्राणतत्परं धर्मतत्परम् ।
गतगर्वप्रियं शूरं जमदग्निसुतं मतम् ॥ ३ ॥
वशीकृतमहादेवं दृप्तभूपकुलान्तकम् ।
तेजस्विनं कार्तवीर्यनाशनं भवनाशनम् ॥ ४ ॥
परशुं दक्षिणे हस्ते वामे च दधतं धनुः ।
रम्यं भृगुकुलोत्तंसं घनश्यामं मनोहरम् ॥ ५ ॥
शुद्धं बुद्धं महाप्रज्ञामंडितं रणपण्डितम् ।
रामं श्रीदत्तकरुणाभाजनं विप्ररंजनम् ॥ ६ ॥
मार्गणाशोषिताब्ध्यंशं पावनं चिरजीविनम् ।
य एतानि जपेद्रामनामानि स कृती भवेत् ॥ ७ ॥

---

## ४० श्रीरामचंद्रस्तोत्रम्

श्री रामचंद्रः सहितास्तचंद्रः ॐ कारवाच्योऽवतु मां सुभद्रः ॥
रा जाधिराजोऽखिललोकभर्ता न तावनाशत्रत आधिहर्ता ॥ १ ॥
म हामहिम्ने परमार्थधाम्ने मो हांतकायाद्य नमोऽस्तु भूम्ने ॥
अ गद्धितायासमुखिमहाय भ चेष्टदायाहितनिग्रहाय ॥ २ ॥
य शेश्वरायाखिलधर्मगोप्त्रे ग तिप्रदायासुरदुष्टहंत्रे ॥
रा म प्रसीदाखिलतापहारिन् च रेण्य कारुण्यनिधेपहारिन् ॥ ३ ॥
म सापराधानखिलान्क्षमस्व ते जोमय श्रीश विभो दयस्व ॥
ज न्मादिहेतो· कृतभूरिमंतोर् द् यामय त्वं परमा गतिर्मे ॥ ४ ॥

य मादियोगं [redacted] च यागमाप त्ता पद्म जाने विहितार्थभोगम् ॥
ज गन्निवासेश्वर मामवाद्य त्रे भायवापान् हर मे भवाद्य ॥ ५ ॥

य शःप्रपूर्णं श्रवणं कुरुष्व या याद्रवित येन सलोऽपि सद्यः ॥
रा गादिविद्धोऽपि तमर्पयाद्य य तीश सत्संगमजानद्भ्य ॥ ६ ॥

म ह्यायकर्ता हि तवेक्षणेन या याद्विमुक्तिं परमक्षणेन ॥
सी तापते तेऽस्तु नमः प्रसीद प्र सीद रामाखिलद प्रसीद ॥ ७ ॥

कौसल्यालसदालवालजनितः सीतालतालिंगितः
सिक्तः पंक्तिरथेन सोदरमहाशाखाभिरभ्युन्नतः ॥
रक्षस्तीक्ष्णनिदाघपाटनपटुच्छायाश्रितानंदकृ-
द्युष्मद्वांछितसत्फलानि फलतु श्रीरामकल्पद्रुमः ॥ ८ ॥

इति श्रीरामचन्द्रस्तोत्रं संपूर्णम् ॥

---

## ४१ पद्यात्मकश्रीरामस्तोत्रम्

राममाश्रय राममाश्रय राममाश्रय मद्रवं ॥
राममाश्रयतां कुतोऽपि भवेत्कुदैयमभद्रम् ॥ ध्रु० ॥
यस्य पादसरोजरम्यरजःकणादपि तत्क्षणं ॥
गौतमर्षिवधूस्ततिः किल यत्कटाक्षनिरीक्षणं ॥
आरवीदु विभीषणाय सुराज्यमर्पयदाशु तं ॥
चित्त चिन्तय विश्रुतं न च हन्ति कोऽपि यदाश्रितम् ॥ १ ॥
माययापि यदाश्रितस्त्विह कोऽपि नो परिभूयते ।
राममार्तिविराममाश्रय कं यतो ह्यनुभूयते ॥
यस्य नामवशाच्छिला अपि सिन्धुना हि समुध्दृताः ।
ते जडा अजडा भवन्ति न किं यदाऽत्र समुध्दृताः ॥ २ ॥

सर्वदैवतशिरोऽखिलशंकरोऽपि हि शंकरो ।
यस्य नाम विमुक्तिधाम जपत्यकाममहितादरः ॥
वासुदेवसरस्वती यमगायताऽखिलकामदम् ।
राममाश्रय तं मतां मतमाशु शाश्वतधामदम् ॥ ३ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वती-
विरचिता श्रीरामस्तुतिः ॥

---

## ४२ श्रीमारुतिस्तोत्रम्

ॐ नमो वायुपुत्राय भीमरूपाय धीमते ।
न मस्ते रामदूताय कामरूपाय श्रीमते ॥ १ ॥
मो ह शोकविनाशाय सीताशोकविनाशिने ।
भ ग्नाशोकवनायास्तु दग्धलङ्काय वाग्मिने ॥ २ ॥
ग तिनिर्जितवाताय लक्ष्मणप्राणदाय च ।
व नौकसां वरिष्ठाय वशिने वनवासिने ॥ ३ ॥
त त्त्वज्ञानसुधासिंधुनिमग्नाय महीयसे ।
आं जनेयाय शूराय सुग्रीवसचिवाय ते ॥ ४ ॥
ज न्ममृत्युभयघ्नाय सर्वक्लेशहराय च ।
ने दिष्ठाय प्रेतभूतपिशाचभयहारिणे ॥ ५ ॥
या तनानाशनायास्तु नमो मर्कटरूपिणे ।
य क्षराक्षसशार्दूलसर्पवृश्चिकभीहृते ॥ ६ ॥
म हाबलाय वीराय चिरंजीविन उद्धृते ।
हा रिणे वज्रदेहाय चोल्लंघितमहाब्धये ॥ ७ ।
ब लिनामग्रगण्याय नमो नः पाहि मारुते ।
ला भदोऽसि त्वमेवाशु हनुमन् राक्षसान्तक ॥ ८ ॥

व्यंकटेशाष्टकमिदं त्रिकालं य पठेन्नर ॥
स सर्वपापनिर्मुक्तो व्यंकटेशप्रियो भवेत् ॥९॥

इति श्री प. प. श्री वासुदेवानन्दसरस्वतीविरचित श्रीव्यंकटेशस्तोत्रं संपूर्णम् ॥

## ४४ श्रीवेंकटेशस्तोत्रम् ॥

व्येमित्यक्षयमाख्यात मुनिभि पापवाचकम् ॥
कटतेर्नाशनार्थत्वात्पापहा वेंकटेश्वर ॥१॥

यो भक्तरक्षणार्थाय विष्णुर्वैकुठवासयन ॥
शेषाचले महालक्ष्म्या सह तिष्ठति वेंकट ॥२॥

चतुर्बाहुरुदारागो निजलाछनलाछित ॥
वेंकटेश इति ख्यातो देव पद्मावतीप्रिय ॥३॥

शेषाचल महोत्तुग सर्वसंपत्समन्वितम् ॥
वैकुठकल्पमकरोच्छ्रीनिवास स नोऽवतु ॥४॥

यद्दर्शनार्थमखिला ऋषियोगिसुरादय ॥
आयाति परया भक्त्या सपत्नीकाश्च सानुगा ॥५॥

विशेषादाश्विने मासे महोत्सवविदक्षव ॥
भक्तानुकपी भगवान्वेंकटेश स नोऽवतु ॥६॥

स त्व मा पाहि देवेश लक्ष्मीश गरुडध्वज ॥
सर्वापत्तिविनाशाय प्रसन्नो भव सर्वदा ॥७॥

प्रसीद लक्ष्मीरमण प्रसीद प्रसीद शेषाद्रिशय प्रसीद ॥
दारिद्र्यदु खादिभय हरस्व त वेंकटेश शरण प्रपद्ये ॥८॥

इति श्री प प श्रीवासुदेवानन्दसरस्वतीविरचित श्रीवेंकटेशस्तोत्र संपूर्णम् ॥

## ४५ गद्यपद्यात्मकं रामकृष्णचरितम्

पृथिवीभरपरिहृत्यै सुरवरसंप्रार्थितोऽत्र भूमितले ॥
नृरूपेण तमोनुद्वंशे सकलोऽप्यवातरद्विमले ॥ १ ॥
पितृबन्धमोचको भूत्वा स्वोत्पत्त्या प्रदर्श्य निजरूपम् ॥
भास्वद्भूत्यै स पितृभ्यां तदनुमतः स्वीचकार सद्रूपम् ॥ २ ॥
नीतो गुरुणान्यत्र च देवरिपून्हन्तुकाम एव पुरा ॥
स्त्रीवधरूपां गणपतिपूजां चक्रे बभूव सापि वरा ॥ ३ ॥
शेषसहायो हतवानसुरान्यवहृद्धो महावीरः ॥
स्वमतं ततान यत्र द्विजदारानुद्दधार धरधीरः ॥ ४ ॥

(गद्यम्) अथ स भगवान् ब्रह्मरूपेणावतीर्णस्तमोनुत्कुलभूषणो विश्वरथेन नीतो निजपूर्वपत्नीपरिणयचिकीर्षुर्नेकेनाप्युत्थापितं न नमितं च राजाभिमानचापं लीलयैवादाय सहसैव बभंज ॥ ५ ॥

कुमारशापेन वैकुण्ठादपि पतितं नीचतां गतमात्मानं पृणानं राजानं समागतमालोच्य पूर्वं श्लाघितवदनापि पद्मसदना हृष्टवदना सती स्वयमेव स्वपतिं वृतवती ॥ ६ ॥

वने श्रियं स विजयश्रिया स्वभागं जहार भृगव इव ॥
हृष्टभ्रातृयुतः स भरतस्य ईशः प्रभुः कृतार्थ इव ॥ ७ ॥

(गद्यम्) अथ ससैन्यश्च सभ्रातृकः सपरिमदो भगवान् स्वराष्ट्रं प्रयास्यन्मेघगम्भीरया वाचा गर्जन्तं प्रत्युत आगतं द्विषन्तं निर्जित्य विजयी स्वनगरे प्राविशत् ॥ ८ ॥

ईदृग्गुणा यस्य न वर्णितुं वान् शेषोऽपि शक्तः क कथा परेषाम् ॥
स पद्मसेतुर्नितदैवशरीरनिर्बाधो रघूणामथवा यदूनाम् ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीरामकृष्णचरितं सम्पूर्णम् ॥

## ४६ श्रीमुरलीधरगोपालाष्टकम्

नमामि गोपिकाकान्तं द्विभुजं मुरलीधरम् ।
शोणाधरं गिरिधरं भक्तदुःखहरं हरिम् ॥ १ ॥

सतोयमेघद्युतिगर्वहारि-
स्फुरद्द्युतिः स्मर्तृभयापहारि ॥
कृष्णाय भूम्ने कमलावराय
नमोऽस्तु तस्मै मुरलीधराय ॥ २ ॥

यो भूमिभारव्यपनुत्तयेऽत्र
ब्रह्मादिदेवार्थित एव पुत्रः ॥
बभूव सुख्यानकदुन्दुभेर्यो
नमोऽस्तु तस्मै मुरलीधराय ॥ ३ ॥

अपाययत्स्तन्यमिषाद्विषं या
तस्यै ददौ मातृचितां गतिं यः ॥
कारुण्यसिन्धुर्निहतासुराय
नमोऽस्तु तस्मै मुरलीधराय ॥ ४ ॥

गाश्चारयन्गोपकुमारयुक्तः
सुरद्विषोऽहन्निजकार्यसक्तः ॥
भक्तप्रियो यो द्विजपक्षपाय
नमोऽस्तु तस्मै मुरलीधराय ॥ ५ ॥

यद्वेणुशब्दश्रवणेन सद्यो
ह्यचेतनं चेतनतां परं च ॥
तथान्यभावं प्रगतं पराय
नमोऽस्तु तस्मै मुरलीधराय ॥ ६ ॥

व्याजेन भर्तुस्त्वमितं विवर्णं
त्यक्त्वा सती दग्धतनुर्बभूव ॥
वेणुर्यदोष्ठामृतभाक्पराय
नमोऽस्तु तस्मै मुरलीधराय ॥ ७ ॥
गोपालाय नमस्तुभ्यमपराधान्क्षमस्व मे ।
कृपां कुरु दयासिन्धो सर्वान्कामान्प्रपूरय ॥ ८ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीमुरलीधरगोपालाष्टकं संपूर्णम् ॥

---

# देवीस्तोत्राणि

## ४७ श्रीरेणुकास्तोत्रम्

ऐंद्यादिवंदितपदे वरदेऽभीष्टकामदे ॥
कामदेवार्चितेऽनंते रेणुके त्वं नमोऽस्तु ते ॥ १ ॥
एकवीरे निजाधारे रुचिरे सज्जनादृते ॥
उदारे रेणुसंजाते रेणुके त्वं नमोऽस्तु ते ॥ २ ॥
करुणारससंपूर्णे नयने सुस्मितानने ॥
शोभने पाहि नोभीते रेणुके त्वं नमोऽस्तुते ॥ ३ ॥
वीरमातर्महादेवि त्वद्भक्त्या पापनाशुचि ॥
तारिणी दुर्गतोऽनंते रेणुके त्वं नमोऽस्तु ते ॥ ४ ॥
राममातर्महामाये भक्तप्रियप्रियेऽभये ॥
विजये वेदविनुते रेणुके त्वं नमोऽस्तुते ॥ ५ ॥

यैरर्चिते तव पदे दे धन्याः परमे पदे ॥
निहितास्ते सुरनुते रेणुकेंब नमोऽस्तुते ॥ ६ ॥
न त्वदन्या गतिर्देवि परमा खलु शांभवि ॥
भुक्तिमुक्तिप्रदे शाते रेणुकेंब नमोऽस्तु ते ॥ ७ ॥
ब्र. केशवेश्वराश्चापि सृष्टिस्थित्यंतकारिणः ॥
प्रसादादेव तेऽनंते रेणुकेंब नमोऽस्तु ते ॥ ८ ॥
जगदंब नमोऽस्तु रेणुके परिपाहीश्वरि न सुभावुके ॥
जयलाभयशःप्रदे मुदे स्तुतिरेषास्तु तवाखिलार्थदे ॥ ९ ॥
नावाहनं नार्चनपद्धतिं ते जाने न भक्तिं त्वयि मे भवांतके ॥
तथापि मां त्वं कुलदेवि भक्तकुलोद्भवं पाह्यपि चार्यसत्तम् ॥१०॥
मातापुरनिवासिन्याः श्रीदेव्याः स्तोत्रमुत्तमम् ॥
यः पठेत्प्रयतो भक्त्या सर्वान्कामान्स आप्नुयात् ॥ ११ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचित
श्री रेणुकास्तोत्र संपूर्णम् ॥

---

## ४८ तुळजापुरवासिनीस्तोत्रम्

नमोऽस्तु ते महादेवि शिवे कल्याणि शांभवि ॥
प्रसीद वेदविनुते जगदंब नमोऽस्तु ते ॥ १ ॥
जगतामादिभूता त्वं जगत्त्वं जगदाश्रया ॥
एकाऽप्यनेकरूपासि जगदंब नमोऽस्तु ते ॥ २ ॥
सृष्टिस्थितिविनाशानां हेतुभूते मुनिस्तुते ॥
प्रसीद देवविनुते जगदंब नमोऽस्तु ते ॥ ३ ॥
सर्वेश्वरि नमस्तुभ्यं सर्वसौभाग्यदायिनि ॥
सर्वशक्तियुतेऽनंते जगदंब नमोऽस्तु ते ॥ ४ ॥

विविधारिष्टशमनि त्रिविधोत्पातनाशिनि ॥
प्रसीद देवि ललिते जगदंब नमोऽस्तु ते ॥ ५ ॥
प्रसीद करुणासिंधो त्वत्तः कारुणिका परा ॥
यतो नास्ति महादेवि जगदंब नमोऽस्तु ते ॥ ६ ॥
शत्रून्जहि जयं देहि सर्वान्कामांश्च देहि मे ॥
भयं नाशय रोगांश्च जगदंब नमोऽस्तु ते ॥ ७ ॥
जगदंब नमोऽस्तु ते हिते जय शंभोर्दयिते महामते ॥
कुलदेवि नमोऽस्तु ते सदा हृदि मे तिष्ठ यतोऽसि सर्वदा ॥८॥
तुळजापुरवासिन्या देव्याः स्तोत्रमिदं परम् ॥
यः पठेत्प्रयतो भक्त्या सर्वान्कामान्स आप्नुयात् ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं श्री-
तुळजापुरवासिन्या देव्याः स्तोत्रं संपूर्णम् ॥

---

## ४९ श्रीदेवीस्तोत्रम्

शुम्भनिशुम्भमुखासुरघ्नी
या मधुकैटभमुखलेरभयघ्नी ॥
सन्मतिदे निजभीतिविनिघ्नी
सद्गतिदेशकरूपा भवनिघ्नी ॥ १ ॥
सा त्वमयीहापि शर्म विधेहि
स्वं मयि धीमपि धर्म च देहि ॥
स्वीयकटाक्षनिरीक्षणरूपं
येन भवेदविदं निजरूपम् ॥ २ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
देवीस्तोत्रं संपूर्णम् ॥

स त्येऽस्यंऽद्या कृपां मोमि पि श्चात्र ध्य धि पालके ॥
र क्ष्यो या लः स्वको मात्रा त त्वतो थं वदामि ते ॥ १२ ॥
स्व स्पज्ञो पि शठोऽदांतो मं दो वा मि मतोऽपिश ॥
सी श्र मा शा परो वायं न चोपे क्षां शिवेर्हसि ॥ १३ ॥
भि या न चो क्तवान्शद्वा न्दे वेडये दे हि कांक्षितम् ॥
क्षु च्छांत्यै ज्ञा न भिक्षान्न हि तद्ये हि तमर्पय ॥ १४ ॥
कृ पया ऽ न स्त मितया दे हि ते र्व रणे रतिम् ॥
त पोदे सा दरं याचे हि तं मे पा रदे कुरु ॥ १५ ॥
स्त वे तं ग छाशकं मां स्ता न्ते श वें प्रिये स्मर ॥
य यें व रः स म्वाथ्यों हा दंहेऽ वि थिवल्लभे ॥ १६ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचित
अन्नपूर्णास्तोत्र संपूर्णम् ॥

---

## ५१ अनसूयास्तोत्रम् ॥

पतिव्रताशिरोरत्नभूता सुंदरविग्रहा ॥
सुचरित्रा दिव्यतेजा सर्वलोकनमस्कृता ॥ १ ॥
विष्णुप्रपौत्री कपौत्री सती कर्दमपुत्रिका ॥
देवहूतिसमुत्पन्ना सुमुखी कपिलस्वसा ॥ २ ॥
अत्रिपत्नी महाभागा दयाक्षांत्यादिभूषिता ॥
अनसूया वेदगेया निजधर्मार्जिताखिला ॥ ३ ॥
श्रीदत्तात्रेयजननी चंद्रमाता मनस्विनी ॥
दुर्वासोजनयित्रीशा जगत्संकटवारिणी ॥ ४ ॥
चतुर्विंशतिनामानि मंगलानि पराणि च ॥
पावनान्यनसूयाया दत्तमातुः पठेन्नरः ॥ ५ ॥

त्रिकालमेककालं वा श्रद्धाभक्तिसमन्वितः ।
तस्य धर्मे रुचिर्दत्ते भक्तिमुक्ति क्रमाद्भवेत् ॥ ६ ॥
इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचित
अनसूयास्तोत्र संपूर्णम् ॥

## ५२ सरस्वतीस्तोत्रम्

वाञ्छाधिकेष्टफलदाननिबद्धदीक्षा
वाक्चातुरीविधुतकेलिकुलाभिमाना ।
वागीशविष्णुभवपूजितपादपद्मा
वाग्जाड्यदास्तु भवतां वचसां सवित्री ॥ १ ॥
शृंगाद्रिवासनिरता वरतुंगभद्रा
तीरप्रचाररसिका फलिपरमपत्नी ।
कीलालजातभवमोदसुखाब्धिराका
वाग्जाड्यदास्तु भवतां वचसां सवित्री ॥ २ ॥
कल्याणशीलधनुष सहजा कृपाब्धि-
हंसाम्बुजातकजपुस्तकस्फाटिमाला ।
पद्मोद्भवादिसमृषालिरूपावदेहा
वाग्जाड्यदास्तु भवतां वचसां सवित्री ॥ ३ ॥
वैराग्यदाननिरता नतमस्करीशा
भोगीन्द्रगर्वविनिवारणदक्षवेर्णा ।
आम्नायशीर्षशतगेयनिजापदाना
वाग्जाड्यदास्तु भवतां वचसां सवित्री ॥ ४ ॥
स्वान्तानन्दनिमग्नस्वान्तां प्रकरोतु सन्ततं कृपया ।
यदुनन्दनमुखवाणी वाणी वीणालसत्कराम्भोजा ॥ ५ ॥

---

१ वासुदेव, २ आनन्द ३ सरस्वती.

# गंगादितीर्थक्षेत्रस्तोत्राणि

## ५३ गंगास्तोत्रम्

गं गे द र्शय ते रूपं मु क्तिदं मु नि चिंतितम् ॥
गा य त्ता रिणि ते दृष्ट्या न्य वेल्को नि ज रूपतः ॥ १ ॥
गं गे श्रे धाघहंत्रीति ते कीर्ति र्दि क्षु विस्तृता ॥
गे या यो गिमुनिध्येया स दा त्वं ग म आधिहे ॥ २ ॥
ति ष्ठेऽ ह स्तरणे मात र्व रिष्ठे य त नान्यतः ॥
धी वै रिः कामसंज्ञो मे पा ज्ञतो रो य हेतुतः ॥ ३ ॥
मू ते कृ त्स्नश्रुतं आत्री पे योदा या रिमकेति यत् ॥
या तृ ष्ण या मतिर्भ्रष्टाऽऽ भ्यो भ्यो बा लः पुनातु माम् ॥ ४ ॥
धी व व स्फुट एवास्तु विष्णुजेऽ पि हिवांवरे ॥
ज ग न्म ति क्षालके भू ष्णु हसन्त्वां शा न्तिवेर्यये ॥ ५ ॥
ना स्म त्ता रक एवान्यो लो के वा चो मृषा न मे ॥
नां सो नं ते श्र मेऽघस्य कं भूयो ह्या न देश तु ॥ ६ ॥
श त्रू न्द मय मे देवि स कला न मृतमदे ॥
दे हिं दा न्तो विमुक्तःस्यां ग तैनाः सा ऽऽयसंशयं ॥ ७ ॥
र क्ष य यपि पापोहं च्छ न्दोन्यें ग वि जाह्नवि ॥
पि ता धः कापथंया मे ति ष्ये ता रः पश्य कः ॥ ८ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
गंगास्तोत्र संपूर्णम् ॥

## ५४ यमुनास्तोत्रम्

यमुना शमनामरस्नसा व्रजतीत्रास्वि यतो निजस्वसा ॥
गुरुधाम दिदृक्षुणायनेऽत्र मयालोकि हि दक्षिणायने ॥ १ ॥
कृष्णभर्तृपरिरम्भणेन या कृष्णभा किमभवत्तथापि या ॥
कृष्णता गजमयेन मानवं कृष्णतां नयति रातु साऽभवम् ॥ २ ॥
आदित्यपुत्री तुहिनाद्रिपुत्री कलिन्दपुत्रीति जगत्प्रतीता ।
स्वानुद्धरापि यमेन नीतान् सा पातु भक्तान् यमुनाघभीतान् ॥३॥
प्रालेयाद्रेर्निर्गता कृष्णकान्ता नानादेशान् या पुनानाप्यकान्ता ।
सस्नौ तोये विष्णुपद्या विशुद्धा तन्माहात्म्यं दर्शयन्ती किमद्धा ॥४॥
यस्यास्तटे सन्निकटे सदैव श्रीकृष्ण आस्ते रतिहृत्सदैव ।
तत्कंठगश्रीतुलसीसुगन्धिसुवासिता सावतु सूर्यजाता ॥ ५ ॥
पराशरात्सत्यव या जातो यत्र महायशाः ।
पाराशर्यो वासुदेवपाराशर्योजसान्वित ॥ ६ ॥
मार्गे कृष्णचतुर्थ्यां तु मार्गे कृष्णप्रियां तु ताम् ।
ददर्श सार्कतनया विनयान्पातु सनया ॥ ७ ॥

इति यमुनास्तोत्रम्

---

## ५५ सरस्वतीनदीस्तोत्रम्

वा ग्वादिनी पापहरासि भेदचोद्यादिकं मद्धर दिव्यमूर्ते ॥
तु शर्मदे वन्ध्यपदेस्तुनित्तादयाचतेहो अयि पुण्यकीर्ते ॥१॥
दे व्यै नमः काचभितेस्तु मातेऽयि सर्वथा अस्याखिलार्थदे त्वं ॥
वा सोत्र ते न स्थितये शिवाया श्रीशस्य पूर्णस्य कलासि सा त्वं ॥२॥
नं दप्रदे सत्यसुतेऽभवाय सूक्ष्मां धियं सम्प्रति मे विधेहि ॥
द यस्व सारस्वजलाधिसेविनृलोकपेरम्मयि सांनिधेहि ॥३॥

स त्वं सरस्वत्यसि मोक्षसद्मा वारिण्यसि स्वस्य जनस्य भर्म ॥
र म्यं हि ते नीरमिदं शिवादे नांगीस्वरोसीह पतेस्स मोहे ॥४॥

स्व भुवदे याधिहरेस्मि वा अचेता अपि प्रह्व उपामनात्ते ॥
ती ममतैर्जेतुमशक्यमेव स निश्चलं चेत इदं कृतं ते ॥५॥

वि धियया गभिर्गुरूनसाधू तीर्थाश्रयां त्वत एव गातुं ॥
र जस्वतुर्यो क्षमतेऽप्यतीवा सुकीर्तिरायच्छतु मे धियं सा ॥६॥

धि यांति वाजिन्यघनाशिनीयमसौमुमुक्षुर्विरतव चाम्भयीह ॥
त मोघहं नीरमिदं यदाधीतीविभ्रमे केऽपि न ते त्यजन्ति ॥७॥

स योगिभावप्रतिमं सुधाम नांदीमुखं तुष्टिदमेव नाम ॥
मं श्रे मतं तीर्थमितोऽधिकं हि यस्मै मवं नास्त्यत एव पाहि ॥८॥

स पीतपोयशमुना नितांतं क्षे पांति ना धिय इमेऽक्षमार्ये ॥
फ रस्वल्पसेहं हि दयेत यो नो दयार्द्रयार्योशिवव ईशवर्ये ॥९॥

स मरतदेवर्षिनुते प्रसीद घेत्तत्र्यके निश्चगते वर्द वे ॥
र क्षस्व मुहुर्मुदिते प्रमत्तः सत्यं न निश्चान्तर एप मत्तः ॥१०॥

स्वयहं हि मां धिक्कृतमत्र विप्रत्वैर्यरं विप्रवरं निषेधिहि ॥
ती क्षणुतेर्व्याधिरगिष्टशापो स्वस्याप मे रातिमति वे दितिहि ॥११॥

स्वो तुं न धेव प्रभुरस्मि येन्द्रतीर्थाधिपे जन्महरे प्रसीद ॥
म पंथ यन् सुष्टुवयेस्स्यपाया सा आह्यदातिभियदा विपद्भ्य ॥१२॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचित
श्रीसरस्वतीनदीस्तोत्रं संपूर्णम् ॥

## ५६ श्रीगोदावरीस्तोत्रम् ॥

वासुदेवमहेशात्मकृष्णावेणीधुनीस्वसा ॥
स्वसाराद्या जनोद्धर्त्री पुत्री सह्यस्य गौतमी ॥ १ ॥

सुरर्षिवंद्या भुवनेनवद्या याद्यात्र नद्याश्रितपापहंत्री ॥
देवेन या कृत्रिमगोवधोत्थदोषापनुत्यै मुनये प्रदत्ता ॥ २ ॥

यात्युत्तमत्वे प्रविवंति मर्त्या यस्याः सकृतेऽपि मवंत्यमर्त्याः ॥
नंदंत उर्ध्वं च यदाप्लवेन नरा हठेनैव सवप्लवेन ॥ ३ ॥

दर्शनमात्रेण मुदा गतिदा गोदावरी वरीवर्ति ॥
समवर्तिविहायद्रोधासी मुक्ति सती नर्तीनार्ति ॥ ४ ॥

रम्ये वसतामसतामपि यत्तीरे हि सा गतिर्भवति ॥
स्वच्छांतरोर्ध्वरेतोयोगिमुनीनां हि सा गतिर्भवति ॥ ५ ॥

तीव्रतापप्रशमनी सा पुनातु महाधुनी ॥
मुनीढ्या धर्मजननी पावनी नोद्यवाशिनी ॥ ६ ॥

सदा गोदार्तिहा गंगा जंतुतापापहारिणी ॥
मोदास्पदा महागंगा पातु पापापहारिणी ॥ ७ ॥

गोदा मोदास्पदा मे भवतु वरवता देवदेवर्षिवन्द्या ।
पारावाराप्यरामा जयति यतियमीट्सेविता विश्ववित्ता ॥
पापाद्या पात्तपापा धृतिमतिगतिदा कोपतापास्यपद्मी ।
वन्दे तां देवदेहां मलकुलदलनीं पावनीं वंद्यवन्द्यां ॥ ८ ॥

गोदाष्टकं सपूर्णम्

---

## ५७ गोदावरीस्तोत्रम् ॥

या स्नातमात्राय नराय गोदा गोदानपुण्याधिदृशिः कुगोदा ॥
गोदासरैदा भुवि सौभगोदा गोदावरी सावतु नः सुगोदा ॥ १ ॥
या गौपवस्तैर्मुनिना हृतात्र या गौतमेन प्रथिता ततोत्र ॥
या गौतमीत्यर्थनराश्वगोदा गोदावरी सावतु नः सुगोदा ॥ २ ॥
विनिर्गता त्र्यंबकमस्तकाद्या स्नातुं समायान्ति यतोपि काश्याः ॥
काऽऽद्याधुनी दृक्सततप्रमोदा गोदावरी सावतु नः सुगोदा ॥ ३ ॥
गङ्गोद्गतिं राति मृताय रेवा तपःफलं दानफलं तथैव ॥
वरं कुरुक्षेत्रमपि त्रयं या गोदावरी सावतु नः सुगोदा ॥ ४ ॥
सिंहे स्थिते वागधिपे पुरोधःसिंहे समायान्त्यखिलानि यत्र ॥
तीर्थानि नष्टाखिललोकखेदा गोदावरी सावतु नः सुगोदा ॥ ५ ॥
यदूर्ध्वरेतोमुनिवर्गलभ्यं तदत्तटस्थैरपि धाम लभ्यम् ॥
अभ्यन्तरक्षालनपाटवोदा गोदावरी सावतु नः सुगोदा ॥ ६ ॥
यस्याः सुधास्पर्धि पयः पिबन्ति न ते पुनर्मातृपयः पिबन्ति ॥
यस्याः पिबन्तोऽम्यमृतं हसन्ति गोदावरी सावतु नः सुगोदा ॥ ७ ॥
सौभाग्यदा भारतवर्षधात्री सौभाग्यभूता जगतो विधात्री ॥
धात्री प्रबोधस्य महामहोदा गोदावरी सावतु नः सुगोदा ॥ ८ ॥
समाप्लुता मया सा या सिषेवे पूर्वसागरम् ॥
साम्रयक्त्रेस्तपःकृष्णसप्तम्यां सति वासरे ॥ ९ ॥
सप्तसुतेरसुता मा मुदा सागरमत्यतः ॥
गोदावरी यरीवर्ति न निद्राति कदाचन ॥ १० ॥
इति गोदावरीस्तोत्रम् ॥

# ५८ श्रीनर्मदालहरी

नर्मदे हरसंभूते हरलिङ्गार्चनादृते ॥
हरलिङ्गाङ्कितवटे जयार्घं नर्मदे हर ॥
नमः प्रातर्मातर्गिरिशदुहितर्नर्मद उत ।
क्षपायां रेवे ते नम इतमते मेकलसुते ॥
नमो नित्यं सत्यं हि त रदकमर्त्यंतकमकं ।
हरत्याधिं सा त्वमखिलविपदे मेऽर्पय सुखम् ॥ १ ॥

महेशाङ्गोद्भूता सुरवरनराणामभिमता ।
युता सिद्धैर्याता प्रसभमिव पाश्चात्यजलधिम् ॥
धृता भीमेनैषा हृतमजकदोषा वरवृषा ।
सुभूषा सद्वेषा रुचिरवपुषा भात्यतिरुषा ॥ २ ॥

तटे यस्यास्तप्त्वा तप उपरिगैर्दुश्चरमरं ।
वरं ह्यत्रेः पत्नी परमनसूया गतभया ॥
स्वपुत्रत्वेनैव त्रिभुवनसमाराध्यमभवं ।
समापास्मद्दैवं क इह सरितं तां तु न नमेत् ॥ ३ ॥

प्रयान्ती सिन्धुं या प्रतिहतगतिर्विन्ध्यपदतो ।
महावेगाऽभङ्गा सकलमलभङ्गा वरभगा ॥
नगान्भित्त्वानेकानपि विविधलोकान्स्वरसत ।
पुनातीयं रेवा जगति वरभावाऽद्भुतभवा ॥ ४ ॥

प्रसिद्धाऽऽस्ते यस्याजनिरमरकण्ठेऽमरकूले ।
मतो नाभिः सिद्धेश्वरपुर उतासौ भृगुपुरे ॥
परे सिन्धौ लीना जगति मलिनानां सुमतिदा ।
समुद्धर्त्री भर्त्री निजभजकलोकस्य गतिदा ॥ ५ ॥

यदीयांबुस्पृष्टः स्पृशति गतियोगेन पवनो ॥
मनोहृद्यं यं तं तमपि स पुनातीति महिमा ॥
प्रतीतो यस्याः सा जगति गतिदासावभयदा ।
सदा सक्तान्युस्वान्किमुत भजतामुद्धरति नो ॥ १२ ॥
यदीयं पानीयं सदमृतमयं चित्सुखमयं
सुपेयं चायुष्यं मतिदमुत वर्चस्यमभयम् ॥
यशस्यं चक्षुष्यं विहितविजयं स्वर्ग्यमलयं ।
सुभव्यं सद्गेयं सकलजगदारोग्यविजयम् ॥ १३ ॥
सुरप्रार्थ्यं पथ्यं स्वयमिह च पूज्यं विजयते
जगन्मान्यं धन्यं मलहृदिह लभ्यं तु नियतेः ॥
नियोगात्सा रेवा नृभवदवदाघार्तिशमनी ।
मनःपीडया पायादविरतमपायाद्धरधुनी ॥ १४ ॥
नियम्यात्मानं ये विहितनियमाः सन्ततपरि-
क्रमं कुर्वन्त्यस्या अमलजलसेवैकनियमाः ॥
सुपूताश्ते धन्या जगति बहुमान्याः परगतिं ।
प्रजन्त्येवं रेवा जयति खलु शर्वाङ्गजनिता ॥ १५ ॥
अये रेवे देवेडितगुणगणे मर्त्यतरणे ।
क्षणेनापि स्नानात्परमगतिदाभीष्टवरदा ॥
स्वमेवातो देवा अपि तव न चेच्छन्ति हि तटं ।
परित्यक्तुं वक्तुं तव गुणगणान्कः प्रभुरिह ॥ १६ ॥
यदीये सत्तोये हिमनगसुतागर्भगमणा-
धिपस्योत्कृत्यारं शिर इह सुरारिः स्वहितकृत् ॥
महामायात्री प्राक्क्षिपदपभयोऽतर्क्यमहिमे-
श्वरस्यात्मान्धीर्याद्गतरुधिरसंस्पर्शवशतः ॥ १७ ॥

ततोऽनन्ता आब्धेः स्मरहरसुतायास्तु सलिले-
मलेऽनन्ता जाता इह रुधिरभासः खलु शिलाः ॥
अभूवन्पाषाणा अखिलमलसंक्षालनपरा ।
यदापूज्या विघ्नक्षपणपटवस्तेऽपि वरदाः ॥ १८ ॥

यदीये पानीये सूक्ष्मममृतसंस्पर्शिजनानि ।
क्षपायां ते ओङ्कारेश्वरवरपुरात्पूर्वन तत ॥
महोत्तुङ्गस्थानात्प्रविशति धवलाख्ये पशुपते-
र्भवन्त्याहो बाणाभिधपरमलिङ्गानि बहुशः ॥ १९ ॥

महान्तस्ते बाणा अपि परमसूक्ष्माः कतिपयाः ।
शुभाः कर्पूराभाः शशधरकलाढ्याः कतिपयाः ॥
परे ये चित्रा अपि च निखिलास्तेऽत्र भगवान् ।
गजारेः सायुज्यं ददत इति रेवाम्बुमहिमा ॥ २० ॥

सर्वप्रभावे जय देवि रेवे, प्रसीद मे वेधु सदैव सेवे ॥
श्रीनर्मदे देवि नमो नमस्ते, श्रीशर्मदे सोमसुते नमस्ते॥२१॥

जयतु विगतदोषाऽरम्भा-महासिन्धुघोषा ।
परिहृतजनदोषा या नमोमात्रतोषा ॥
जयतु भजकपोषा सा वहन्ती विशेषा ।
निरुपमतमभूषा मालिनी दिव्यवेषा ॥ २२ ॥

सन्मानसस्यन्दनशुद्धदिव्यनीरा ।
नीरागयोग्याखिलरम्यतीरा ॥
धीरार्चिता नित्यमनन्तपूरा ।
सा पातु रेवेप्सनतसारा ॥ २३ ॥

स्वभक्तवरदे सुरद्विपदमेध्यसद्धर्मदे ।
सुदुर्गविदकर्मदे हृतगदेऽपि सद्धर्मदे ॥
अये नदि न दीनता भजसि कर्हिचिन्छर्मदे ।
प्रसीद जनशर्मदे जय नमोऽस्तु ते नर्मदे　॥ २४ ॥

यन्मूलेऽत्यमरेश्वरो विजयते श्रीसिद्धनाथस्तथा ।
कावेरीपरिवेष्टितो गतिद ओंकारोऽपरे चामिता ॥
मध्येऽन्येऽपि च शूलपाणिसहिता पाश्चात्यभागे स्थिता ।
सर्वे त भजतामभीष्टफलदा वर्वर्ति सा नर्मदा ॥ २५ ॥

हरपरमरये सदस्तमघ मम
(हारबन्ध) कुरु गुरुकरुणा समस्तमते मयि ॥
खलबलदलने समस्तमनोमरम् ।
हर दरभरमत्यमर्त्यमतेऽमले　॥ २६ ॥

यस्य स्मृत्या च सद्य कलिमलविलयो जायते भावुकानां ।
यत्स्मृत्या स्मर्तृगामी भवभयहरुपे यात्मदो भावुकानाम् ॥
दत्तात्रेयस्य तस्य प्रशमितमनस सद्धरीर्थानि मातु ।
स्थान यस्यास्तटे सा विजयत सुशती नर्मदा शर्मदा न ॥२७॥

(अलङ्कार )कुष्ठाद्यार्तोऽप्यरोगो भवति सदनसूयाश्रमे यत्तटे यन् ॥
मध्ये शुक्लाग्निवार्यान्यपि झटिति पुनन्त्युद्धरत्याशु या च ॥
प्रेतश्राद्धेन नारायणबलित इतं दुर्गतिं मुक्तिदा ता ॥
रेवामस्तौन्खेदा परमसुहितदा नर्मदा वासुदेव　॥ १ ॥

(नामूत्रिकापन्ध, भवान्तकेऽभय देहि ताप मे हर नर्मदे ॥
भवाम्बक नय देहि पाप मे हर नर्मदे ॥

जय जय शिवकन्ये नर्मदे शर्मदे त्वम् ।
जय जय जनमान्ये धर्मदेऽधर्मदे त्वम् ॥
जय जय सुवदान्ये घर्मदे कर्मदे त्वम् ।
जय जय भुवि धन्ये भर्मदे वर्मदे त्वम् ॥

इति श्री. प. प. वासुदेवानन्दसरस्वतीविरचिता
श्रीनर्मदालहरी सम्पूर्णा ॥

---

## ५९ मन्त्रगर्भश्रीनर्मदास्तोत्रम्

या रिर्ता न र्थसघा या    अ नन्य न समुत्थये ॥
सु क्ष्म श मे निदानायै    न दा पुं मो हसंहते ॥ १ ॥
वे वर्पि दा नयेडपाये    सू क्ष्मव स्तु दशे नमः ॥
या क्यार्था धे सोमपुत्र्यै    या तना न लशान्वये ॥ २ ॥
नै दायै न मंदारी ले    त्रि धा ठ मे विशुद्धये ॥
द या द मः स्थेयंकस्यै    से सिद्धे दे यतात्मने ॥ ३ ॥
म त्य सं मा तिपारिण्यै    भू स्यि सं तु शिद्देतवे ॥
र म्यायै व स्वरूपिण्यै    [illegible] परस्य श्यं तरात्मने ॥ ४ ॥
स्थ स्तस्थ नै शाविरत्नांशु    द भि त त्रा सिभीतये ॥
श्री मदा मे इते पुंड    त्तापघ्न्ये हि तधीयंये ॥ ५ ॥
फ तार दा रिमोक्षायै    ने भाभर् मो गनुनये ॥
ठ पो दा यै तप सिध्यै    य शांयं नियमीहते ॥ ६ ॥
रे याये न रसापस्न्यै    रि क्यायै पट्टिडिपारने ॥
या मना मो ब्रह्मायै    गं गायै सारव कैंतये ॥ ७ ॥

स्तु तायै नि त्यदीप्तायै प्र लिप्त पेंदुदुध्दते ॥
वि तिष्ठ शिवसंधात्र्यै र त्यै चे त.समाधये ॥ ८ ॥

जय जय शिवकन्ये नर्मदे शर्मदे त्वम् ।
जय जय जनमान्ये धर्मदेऽधर्मदे त्वम् ॥
जय जय सुयशान्ये धर्मदे कर्मदे त्वम् ।
जय जय भुवि धन्ये मर्मदे वर्मदे त्वम् ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचित
श्रीनर्मदास्तोत्रं संपूर्णम् ॥

---

## ६० श्रीक्षिप्रात्रिकम्

क्षिप्रामक्षिप्रदां क्षिप्राभीष्टदां क्षिप्रतारिणीं ॥
क्षिप्रप्रसादनार्थं तां प्रपद्ये सुरवन्दिताम् ॥ १ ॥

यत्तीरेऽवन्तिकाख्याऽऽस्ते महाकालाभिधेशितुः ॥
राजधान्यधिका काश्या मृता यत्रामृतं गता ॥ २ ॥

धर्मध्वत्या युता याऽऽपूर्वसागरमादरात् ॥
प्रणता समता देवैः क्षिप्रा देवी पुनातु माम् ॥ ३ ॥

इति. श्री. प. प. श्रीवासुदेवानन्दसरस्वती विरचित-
श्रीक्षिप्रात्रिकं संपूर्णम्

---

## ६१ श्रीवेत्रवतीस्तोत्रम्

ये प्रवल्या महानद्या गु णान्वक्तुं न ईशिरे ॥
श्र पामवाप देवार्षे रु क्तये यत्स्तुतेरलम् ॥ १ ॥
च रद्दा येत्रवत्येषा दे वर्षिनरसेविता ॥
सी मतापाघशमनी म न्या नः पातु सर्वदा ॥ २ ॥
स्तु तिं कर्तुमनीशोऽहं द याब्धेऽञ करौ युगे ॥
ति मिरघ्नि नमस्ते हृत्ता पं हर सरिद्वरे ॥ ३ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीवेत्रवतीस्तोत्रं संपूर्णम्

---

## ६२ पयोष्णीत्रिकम्

पयोष्णिका पातु पयोधिमिष्टक्षीरा यथा सिन्धुषु याघभीष्टम् ॥
फलं सकृत्स्नानत एव राति त्वां तां प्रपद्येवहि नानवद्ये ॥ १ ॥
यन्नर्मदोपनगमस्थि हि तीर्थवर्यं यत्सेवनेन सकलर्णनिवृत्तिरेव ॥
यत्स्नानतो गतिमवापुरहो पिशाचाः सर्वापदोऽवतु सदात्र
पयोष्णिका सा ॥ २ ॥

याम्यन्विना हि सरिता प्रययौ समुद्रं पश्चात्समिष्टफलदा सकलार्तिहन्त्री ॥
शास्त्री समस्तदुरितान्नि कामदात्री सर्वापदोऽवतु सदात्र पयोष्णि-
का सा ॥ ३ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
पयोष्णीत्रिकं संपूर्णम् ॥

---

## ६२ तापीस्तोत्रम्

छाया विवस्वद्दुहिता द्वितीया पुरातनी स्वत्र धुनी कृतार्था ॥
ययाऽऽस भूर्न्यानिभूषितापि तापीसरित्साऽवतु मां स्मृतापि ॥१॥

तपती पतिमाप्तुमुद्गता वरविंध्याद्रिपदाम्बुदोत्थिता ॥
प्रययौ नवयौवनान्विता जलधिं पश्चिममर्कहर्यंचिता ॥ २ ॥

पुनानाऽपि नानाजनानंहसोऽत्र पदं राति याति प्रशस्तं परत्र ॥
यदीये प्रतीरेऽत्र पापी न तापी न कोऽपीयमस्मानवत्वत्र तापी ॥३॥

भुजगप्रयातोपमा यद्गतिर्या मतिं न पुनाना ददाना गतिं या ॥
यदं पश्चिमाब्धिं सुखेनोरयेमे हरत्वद्य ताम् पाप्मन. संति ये मे ॥४॥

जयरजा परजातिसुपूजिता द्युमणिजा मणिजातिविभूषिता ॥
सुतपती तपती पतिगाऽनतानवति सा यशसा पयसाऽन्विता ॥५॥

या वारयत्याशु यदिरजालेपोऽम पातकमाप्रवेन ॥
द्रवेन यशेन तयागतेर्न यथा नदी राति सहाश्रयेन ॥ ६ ॥

जगति तपनशीला याहि तापी सुशीला,
चलति भुवि विशाला सुरिपानीयशाला ॥
परिहृतजनपाला खेलदुच्चोर्मिमाला,
निखिलसुकृतपाला पातु न सूर्यबाला ॥ ७ ॥

जये तापीह्यपि प्रशमितभये ते सुसमये,
सदा दत्तात्रेयो निवसति मतिप्रार्पितनये ॥
न ये त्वां सेवंते त इह जनिभाजोऽत्र भजते
गतिः सद्यो यासीत्यत्र फणिगणरत्वां हि भजते ॥ ८ ॥

वेणुवादनरतान्युतांचिता
या पुरी पुरजिताऽपि रक्षिता ॥
सन्ति यत्र विबुधा अनेकशः
सन्ति विप्रसदनानि भूरिशः ॥ ६ ॥

तस्यां पद्मावतीपुर्यां वेंन्यासंज्ञा महाधुनी ॥
मधुर्नीरा विजयते जयतेजोयशःप्रदा ॥ ७ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीवेण्यास्तोत्रं संपूर्णम् ॥

## ६५ श्रीतुङ्गाष्टकम् ॥

तुङ्गा तुङ्गतरङ्गवेगसुभगा गङ्गासमा निम्नगा
रोगान्ताऽवतु सह्यसंस्थितनगाज्जाताऽरि पूर्वाब्धिगा ॥
रागाद्यान्तरदोषहृद्बरभगा वागादिमार्गातिगा
योगादीष्टसुसिद्धिदा हतभगा स्वङ्गा सुवेगापगा ॥ १ ॥

स्वसा कृष्णावेणीसरित वत वेणीवसुमणि-
प्रभापूतक्षोणीधकितवरवाणीसुसरणिः ॥
अशेषाघश्रेणीहृदतिलमनोभ्रान्तहरणि-
र्इदा स्वर्निश्रेणिर्जयति धरणीवक्षरमणी ॥ २ ॥

इदं धृत्वा क्षिप्ता भवजलनिधौ मद्गविधुता
भ्रमच्चित्ताअस्ता उपगतसुपोता अपि गताः ॥
अधोधस्तान्भ्रान्तान्परमकृपया वीक्ष्य सरणिः
स्वयं तुङ्गा गङ्गामवदसुभङ्गापहरणी ॥ ३ ॥

यथा सधर्मा मिलिताऽत्र पूर्वतो भद्रा कुमुद्वत्यपि वारुणीतः ॥
तन्मध्यदेशेऽखिलपापहारिणी व्यालोकि तुङ्गाऽखिलतापहारिणी ॥ ४ ॥

भद्रया राजते कीर्त्या या तुङ्गा सह भद्रया ॥
संनिधिं सा करोत्वेतं श्रीदत्तं लघुसंनिधिम् ॥ ५ ॥

गङ्गास्नानं तुङ्गापानं भीमातीरे यस्य ध्यानम् ।
लक्ष्मीपुर्यां भिक्षादानं कृष्णातीरे चानुष्ठानम् ॥
सिंहाद्र्यद्रौ निद्रास्थानं सेवा यस्य प्रीत्या ध्यानम् ।
सह्यकायाक्षय्यं दानं श्रीदत्तस्यास्यास्तु ध्यानम् ॥ ६ ॥

(गोमूत्रिकाबंधः) तुंगापगा महागंगा पातु पापविनाशिनी ॥
रागातिगा महागंगा जंतुतापविनाशिनी ॥ ७ ॥

(हारबंधः) हर परमये भयस्तमसामयान् खलबलदलनेऽघमल्पमले मम ॥
हरसि हसरसे ममातमनामलं कुरु गुरुकरुणां समरसमते
मयि ॥ ८ ॥

येगात्तुङ्गापगाघं हरतु रमया देवदेवर्षिवन्द्या
यां यां यं यत्र लग्नप्रभुप्रसादने शास्त्रशर्म ॥
श्रीदत्तो दत्तदत्तो विवति यत्र बहु स्वा पयः पद्मरत्ना-
क्षी धामेऽमिताभा भज भज भजतां तारकां रत्नरम्याम् ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
तुङ्गाष्टकं सम्पूर्णम् ॥

---

## ६६ चन्द्रभागास्तुतित्रिकम्

पूर्वं नदी या प्रथिताऽत्र भीमा भूमापतेर्या समभूदभीमा ।
यस्याप्तटे रश्मि चन्द्रभा या हरिपूर्णी सा पातु चन्द्रभागा ॥ १ ॥

या पाण्डुरङ्गस्य पुरीं वरिष्ठामावृत्य पूर्वादिधमगाद्गरिष्ठा ।
सा चन्द्रभागा त्रिविधाघहन्त्री भवत्वजस्रं मम कामदात्री ॥ २ ॥
यथा हि पक्षार्धगचन्द्रभागास्तद्वद्धृताङ्गा खलु चन्द्रभागा ।
रागादिदोषाग्निविनिवार्य क्षान्तिं ददातु मे चोपरतिं च शान्तिम् ॥३॥

---

## ६७ ज्ञानतीर्थस्तोत्रषट्पदी

विशुद्धविज्ञानमहावाक्यार्थालोचनस्रुतम् ॥
अन्त्यात्माकारवृत्त्यात्मज्ञानतीर्थं पुनातु माम् ॥ १ ॥
रागद्वेषमुखानात्मगतदोषान्विधूय यत् ॥
सत्त्वशुद्धिं विधत्ते तज्ज्ञानतीर्थं पुनातु माम् ॥ २ ॥
यत्केवलं सजातीयाख्यप्रवाहोपबृंहितम् ॥
उत्पाटयत्यविद्याद्रुन्ज्ञानतीर्थं पुनातु माम् ॥ ३ ॥
श्रद्धावति विसंदेहे तत्परे विजितेन्द्रिये
सदेति शान्तिदं यत्तज्ज्ञानतीर्थं पुनातु माम् ॥ ४ ॥
यत्स्वयं योगसंसिद्धे कालेनोदेति निर्मलम् ॥
पवित्राणां पवित्रं तज्ज्ञानतीर्थं पुनातु माम् ॥ ५ ॥
हृदयग्रन्थिभित्सर्वसंशयच्छिच्च कर्महृत् ॥
शोकमोहनुदाभेतज्ज्ञानतीर्थं पुनातु माम् ॥ ६ ॥
षट्पदीयं मदीयास्यपद्मे तिष्ठतु सर्वदा ॥
गुर्वोभिन्नेशभक्त्याप्तज्ञानतीर्थसमाह्वया ॥ ७ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
ज्ञानतीर्थषट्पदीस्तोत्रं संपूर्णम् ॥

---

## ६८ सद्गुरुतीर्थस्तोत्रम्

वाक्याऽऽविवेचनाच्छुत्या द्वैतद्रुन्मूलनोचिता ।
प्रत्यक्परात्मैक्यसिन्धौ याऽखण्डैकरसप्रदा ॥ १ ॥
संगता ज्ञानगङ्गा तां संकल्पत्यागपूर्वकम् ।
दयया केवलं शिष्यं यः स्नापयति बुद्धिमान् ॥ २ ॥
पापेच्छाविभवो भूयो नैव यत्करुणाक्षणात् ।
पुनरावृत्तिरहितदेवप्राप्तिकरश्च यः ॥ ३ ॥
सदेव सद्गुर्वभिधमहातीर्थं सतां मतम् ।
तीर्यतेऽस्मान्महापापात्तत्तीर्थं सद्गुरुः परम् ॥ ४ ॥
यस्मात्तीर्थात्परं तीर्थं न भूतं न भविष्यति ।
स्मरणाद्दर्शनादस्य सेवनाच्च कृतार्थता ॥ ५ ॥
तीर्थानि दिग्देशकालपरिच्छिन्नानि यान्यतः ।
विलक्षणं ज्ञानतीर्थं कृपया तद्ददाति यत् ॥ ६ ॥
तीर्थानां परमं तीर्थं तारकाणां च तारकम् ।
सद्गुर्वाख्यं महातीर्थं भजामि परमार्थदम् ॥ ७ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं सद्गुरुतीर्थस्तोत्रं संपूर्णम् ।

---

## ६९ श्रीकृष्णालहरी

चतुर्बाहुः श्रीमत्सजलजलदश्यामलतनुः
प्रकाशाब्जश्रेन्दुः सद्गुणगणसुधापात्रलिपिपे ॥
तडिद्वासा मामप्यलघुतिलकलसन्मौलिरवतात्
क्षमाभस्य भ्रात्रेऽपि जयति सूनुः स्वादितकृत् ॥ १ ॥

अपि श्रीकृष्णे ते महिमपरपारं व्रजति को
न शेषोऽशेषास्यैरपि कथयितुं वा प्रभवति ॥
अतो ह्रीतो वाचः शुचय इह वन्म्यल्पकमिदं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २ ॥

अलक्ष्यं ते रूपं वचनहृदयाध्वातिगमतो
नतोऽहं ते लक्ष्यं कथमपि च विहाय वरदे ॥
प्रवृत्तस्त्वां स्तोतुं स्वमतिगतितस्ते वरगुणे
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३ ॥

धृता साहित्यज्ञैरपि सुगुणसंपत्सुललिता –
मितार्थास्त्वानर्घा न च तव मुदे तापि कविता ॥
समर्थाथापि त्वं शिशुवचनवन्मे शृणु मुदा
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४ ॥

रसज्ञा मे दृष्टा मुनिनमितदत्तात्रिजपदे
मुदे तस्यापीयं प्रभवति न किं साधुलहरी ॥
हरीशात्मा कृष्णा यत इयमभूद्दत्तदयिता
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ५ ॥

न च प्राज्यं राज्यं न च विबुधपूज्यं सुरपदं
पदं पूष्णो जिष्णोरपि मम न विष्णोरभिमतम् ॥
मतं दत्तात्रेयप्रपदपरिपूतं तव तटं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ६ ॥

न भोगं नो योगं न च दुरितभङ्गं लषति मे
मनोऽरोगं गाङ्गं जलमपि न साङ्गं श्रुतिगणम् ॥
न यागं न स्वर्गं तव सततयोगं लषति मे
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ७ ॥

मनो मे श्रीकृष्णे त्वदुपसरति क्वापि न कलौ
मलौघघ्नीतिघ्नी भवति भवतीद्देति सततम् ॥
सुपेयस्त्वं स्वस्तं जगति गदिते साधनचया-
श्रमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ८ ॥

महाभक्ता गङ्गा यदि दुरितभङ्गात्र कथिता
भवत्यपीह त्वत्तः कथमधिकतामेति विमता ॥
हरेः सांख्युत्सृत्वा त्वमिह ननु मूर्ता हरितनु-
र्नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ९ ॥

हरेर्ह्यङ्घ्र्यब्जाभिनवबिसवल्ली भवतु वा-
प्यधितिष्ठत्वीट्शीर्षं स्रगिव च पताकेव सुतराम् ॥
प्रकामं मुक्तेर्नै त्वमिव भवति श्रीहरितनु-
र्नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १० ॥

गते जीवे कन्यां जगति बहुमान्यां गिरिवरेणी-
ह सह्ये त्वां धन्यां जननि भगिनीशामरसरित् ॥
समागत्याप्यब्दं परमनियमात्तिष्ठति मुदा
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ११ ॥

महाजंबुद्वीपे वृजिनहरतीर्थानि वरदे
समायान्ति त्वान्तु त्रिविधमलहरे तानि परदे ॥
तदा त्वत्स्नानादेः फलमपि न वक्तुं प्रभुरहो
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १२ ॥

पितॄनुद्दिश्यैको वितरति निवापाञ्जलिमये
मनुष्यस्त्वय्यम्बे सकलपितरोऽस्य द्रुतमये ॥
गतिं यान्ति श्राद्धादपि च पुनरावृत्तिरहितां
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १३ ॥

महापाप्याकल्पं यदि विधिवशाद्दुर्गतिमितो
वृषोत्सर्गात्सोऽपि द्रुतमिह हि नारायणबलेः ॥
त्रिपिण्डीश्राद्धाद्वा व्रजति सुगतिं दुर्लभतरां
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १४ ॥

सुतं लेभे वन्ध्या ऋणहृदिमृणी दुःख्यपि सुखं
नरो यो यो यं यं स्मरति हृदि कामं स स च तम् ॥
अवापेति ज्ञात्वा जननि पतितस्तेऽद्य पुरतो
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १५ ॥

अहो माहात्म्यं ते शुकजनक आहात्र हि महा-
बलेशादासिन्धोरुभयतटसंस्थेषु बहुषु ॥
महातीर्थेष्वग्र्यं नृहरिपुरि तीर्थाष्टकमिदं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १६ ॥

मुखं ते सह्याधः सदयहृदयं ते नरहरेः
पुरेऽप्यारम्भे नाभिः प्रपदयुगलं प्राच्यविषये ॥
अये श्रीकृष्णे ते प्रथितमिह रूपं मुनिमते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १७ ॥

नरः श्रीकृष्णे ते सुलभममृतस्पर्धि मधुरं
वरं नाम ब्रूयात्त्वमपि स निःश्रेयसमियात् ॥
सुदूरस्थो स्वस्थोऽप्यथ किमुत साक्षाद्व्रजति यो
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १८ ॥

पुरेष्टं दत्तं वा विहितमपि पूर्तं च सुकृतं
स्वधीतं वा जप्तं श्रुतमपि यशोऽजस्य हि तदा ॥
भवद्दृष्टिं कृष्णे भवति भवभीहृत्खलु नृणां
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १९ ॥

प्रकृत्यैक्याद्भेदो न हरिहरयोः प्रत्ययवशात्
पृथग्वद्भातीति प्रथयितुमहो शंभुवपुषा ॥
युता वेण्यापि त्वं भगवति पृथक्त्वं न भजसे
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २० ॥

अये योगिध्येये निगमगणगेयेऽविधनिलयेऽ
नपाये दत्ताये कलुषविलये सह्यतनये ॥
त्वदन्यस्त्रो वीक्षे सुलभशरणं लीढमरणं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २१ ॥

परिक्रान्ता देशा भगवति चतस्रोऽपि च दिशा
न शान्ता दुष्टाशाप्यजनि वपुषो मेऽन्तिमदशा ॥
प्रशान्ताद्यैशाशा तव दृशिवशादास सुदशा
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २२ ॥

त्वदीये सत्तोये जलचरगणा ये गतभया
वयांसीशे वान्ये पशुमृगगणाः कीटकगणाः ॥
अपि स्नाताः पीताः कथमपि ततस्ते दिवमिता
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २३ ॥

गतः क्रूरो जारो दिवमपि च चोरो वनचरो
वरोदे ते स्नानात्कथमपि नरो यः श्रुतपरः ॥
स किं स्नानात्ते न व्रजति गतिमव श्रुतमते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २४ ॥

अपि स्नातं तीर्थे सकलमखिलं दैवतमिहा-
र्चितं सर्वं दत्तं हुतमपि च पूतं खलु कृतम् ॥
तव स्नातं मातर्विधिवदिह येनांबु सुगते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २५ ॥

अवज्ञातं तीर्थं सकलमपि देवा अवमता
न दत्तं मे नेष्टं व्रतमपि च पूर्तं किमपि नो ॥
स्थितं त्वत्सामर्थ्याद्रभरवशाद्देवि सरिते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २६ ॥

क्षमः कस्याप्यग्रे क्षणमपि न च स्थातुमभवे
भवेयं तूष्णींस्थोऽभवमिह हि हास्यास्पदमतः ॥
तवेयं लज्जास्तामपि सपदि मामुद्धर हिते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २७ ॥

त्वया प्रत्याख्यातो यदि भवति भीतोयमभवे
भवेदन्यस्याय त्रिजगदुदरे किं नु शरणम् ॥
रणन्तुर्धैर्दैस्तदिह मरणं यामि महिते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २८ ॥

महापापं तापं गतमपि सकंपं गतकृपं
सशापं लोको मां हसतु बहु तापं न गणये ॥
विधेयंहोपाये तव विरुदभङ्गाद्भगनुते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २९ ॥

त्रितापघ्नीतिघ्नी भुवि पतितपावन्यघहरा
त्रितापघ्नी भेदिनी विविधवरदात्री ऋणहरा ॥
यदा सिन्धुप्वंतद्विरदनिचयो जीवतु चिरम्
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३० ॥

यदाशायान्निर्मुक्ता त्वमिह तत आरभ्य पतिता
विशोध्याप्युन्नीता अधिकतम एभ्योऽस्म्यत इमम् ॥
यदोद्धर्तुं शक्ता त्वमसि तत पचिष्ठ सरिते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३१ ॥

अयं सामान्योऽस्तीत्यपि मनसि मा स्थापय यतः
सगरवाधौघास्ते जननि मयि तिष्ठन्ति सुचिरम् ॥
अतो वध्वोत्तिष्ठेश्वरि परिकरं त्वं दृढतरं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३२ ॥

ममोद्धारेणाद्य त्रिजगति सुकीर्तिर्भवतु तेऽ
क्षितेऽतीते काले न खलु विमले त्वीदृगभवत् ॥
प्रसङ्गोसङ्गोऽहं तव उपरि यास्येऽभयपदं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३३ ॥

अतः प्रादुर्भूत्वा परमनिजरूपेण सहसा
ममाघाद्रीन्भित्वा सकलमलहन्त्रीह सहसा ॥
कृपाक्षीरं धृत्वाङ्कमुपरि च मे देहि सहसा
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३४ ॥

कृतस्त्वय्येतावद्दुरितमिति शङ्कास्तु न यतो-
ऽन्यथात्मानं क्षंतं तत इतरथा वेद्मि हि मया ॥
निजात्मस्तेनेन प्रविपद्मम किं न विहितं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३५ ॥

समं साक्षात्पश्यस्यखिलहृदयस्थे भगवति
स्वदग्रे वक्तव्यं न हि न हि तथापीह वदति ॥
प्रभोरग्रे लोकास्तदनुसरणं मेऽस्तु शरणं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३६ ॥

स्वभूरूपेण त्वं सृजसि हरिधाम्नावसि हरा-
त्मना हंसीन्द्राद्या विसृजसि विभूतीः स्वकलया ॥
लयान्ते ते कुक्षिं विशति सकलं मङ्गलगते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३७ ॥

इहापि त्वं पापिप्रचयमलसंक्षालनपटू-
दकात्मा सूरासूरपि सुरगणाः शापमिषतः ॥
स्वतन्त्रे सन्मन्त्रे सरित इह भूत्वा तव गता
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३८ ॥
तमोनुत्ते भासा जगति खलु भास्वान् भवति
स्वयंज्योतिः स त्वां तपनमिव मे भासयत इत् ॥
अये भातां त्वानु द्युमणिसहितं भाति सकलं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३९ ॥
गणी वेणी भूत्वाप्यसुरसुरवाराहतपदो
महोद्धत्यै यद्दृग्भुवनजयिनोऽलं कुसुमगोः ॥
स गोवाहोऽपि त्वां परममादिवत्सन्नत वस
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४० ॥
स्वयंभूर्ब्रह्मायं भुवनरचनाभिहतधिषणः
कमुदत्याभिख्या सरिदिह हि भूत्वापि सुवसत् ॥
समायातस्त्वां संमुखमु करहाटाख्यविषये
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४१ ॥
द्विजाः काले काले शुचिषु च चतुर्भिः करदश-
चतुर्भिर्द्वाभ्यां पञ्चभिरपि बुधा जुह्वति सति ॥
पुनर्द्वाभ्यां स्नानादपि नयसि नाकं त्वमचिरात्
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४२ ॥
प्रभावस्तेपारत्दहति दहनो वाति पवनो
मनोल्हादे भीतस्तपति तपनो धावति मृतिः ॥
कृपा वर्षत्यन्ये त इह बलिमुञ्चन्ति नियतं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४३ ॥

क्व शक्तिस्तेऽनन्ते विविधकुकृताद्रिप्रहरण-
क्षमा सामान्यं मे त्रिविधमपि पापं क्व नु कियत् ॥
तवाग्रे वह्न्यग्रे विरसबहुशष्पाद्रिवदहो
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४४ ॥

न कृच्छ्राद्याः शक्ता यदघहरणायापि बहुशो
न च प्रायश्चित्तं हवनजपनाद्यं क्षममभूत् ॥
स कृष्णे त्वत्स्नानाद् व्रजति सुशुचिः सन्दियमहो
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४५ ॥

कुसङ्गान्यास्त्र्यर्थापहरणमुखं कायिकमघं
दुरुक्त्यायोन्निन्दाकदशनमुखं वाचिकमघम् ॥
कुचिन्तान्यानर्थस्मरणमुखरं मानसमघं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४६ ॥

त्वदीयाम्भस्पृष्टः स्पृशतु गतिदे स्पर्शन वत
त्वदीयं पानीयं पततु वदनाब्जे मम वत ॥
अतोऽहो त्वत्तीरं तुहिनशिशिरेऽङ्गं पततु मे
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४७ ॥

स्तुता तीर्थैः सर्वैरपि जगति सर्वाभिरमले
सरिद्भिर्देवेन्द्रैरपि मुनिभिरत्यादृततटाम् ॥
न कस्त्वां सेवेत प्रवरसरिदत्राघमथने
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४८ ॥

धरेन्द्रतनयेऽभयेऽस्म्युपगतोऽनुकम्पोदये
जयेश्वरि हरीशरूपिणि मणिद्युते त्वार्यये ॥
भये नादे न दीनतां व्रजतु हृन्मदीयं त्वये
श्रये वपुषि तेऽसिते भवतु दृक्त्वदीयेऽस्मये ॥ ४९ ॥

काचित्क्षालयति प्रभोः पद्युगं काचित्क्रमारोहति
स्वेदात्कापि जटान्तिः प्रकटिता बद्धापधेद्धाहिता ॥
सर्वैः काचन मानिनीह पतिता जाता गता काप्यध-
स्त्यक्तं ते न च नाम रूपमपि सत्कृष्णे दशायामिह ॥५०॥

(हारबन्धः) देवेष्टदे वेदवेद्ये जय जय भयहृत्त्वं कृपाकृष्णकृष्णे
त्राहि त्राहि महार्तिं रतय भवहवराज्यां सदा सत्यसन्धे ॥
भूयो भूयोऽभयोक्तीश्चिंतर तव तनुर्येह मोहप्रहर्त्री
सा मे कामेश मेध्या मनसि नयनयोराद्राद्रस्तु दृष्ट ॥५१॥

(गोमूत्रिकाबन्धः) कृष्णां यो वृणुते भक्तः पदं यायाभिरन्तरम् ॥
कृष्णां यो शृणुते भक्तः खेदं यायाधिरन्तरम् ॥५२॥

कृष्णास्यप्रेरितमतिर्वासुदेवसरस्वती ॥
कृष्णामस्तौदतः प्रीयाच्चरसिद्धसरस्वती ॥ ५३ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचिता
श्रीकृष्णालहरी संपूर्णा ॥

---

## ७० श्रीकृष्णापंचकस्तोत्रम्

कृष्णा नः पातु कृष्णाद्रमधुररसा चिद्रसासारसाक्षी
साक्षीभूता नतानां निखिलमरहस्या या ह्यनंतमूर्तिः ॥
मूर्तिघ्नी भीतिनिघ्नी सकलहितरता तारतम्यव्यतीता
सीता याभिश्चित्तमार्गं जगति गतिदृयतव्यालिरेषा विशेषा ॥१॥

कृष्णावेणी सततरुणी वीक्षिता मध्यनीपूद्
योषा येषा सुपमवपुषा भासमाना ममाना ॥
मानार्तानारि खलु भजतां दद्यतां याति माता
माता पादेरित उपरि परिक्रांतिवार्ता मयीह ॥ २ ॥

तव गुणगणं वारं वारं सुधारुचिरं चिरं
भगवति सति स्मारं स्मारं परं त्वचरं वरं ॥
न लपति मतिः सारं सारं विचार्य परावरं
लपति म इतो दूरं दूरं प्रदर्शय तं परम् ॥ ३ ॥

कृष्णे कृष्णतनो मनोहरकथे नाथेश्वरि प्रार्थये
दत्तं दत्तपदं प्रदर्शय परं नातो वरं स्पर्धये ॥
अन्यं येऽटति ते तटे नट इवानेकाङ्गधारी हरिः
संसाराब्धिविमर्दनः शमपरः साक्षाच्च आत्मा विभु ॥ ४ ॥

प्रायप्रभाधिलसहस्सु महस्सु देव
उद्यन्स्वयं हरति हार्दतमः स एव ॥
तीरे भ्रमत्यनुदिनं तव भावगम्य-
स्तं दर्शयाशु कृपयाऽप्यनुपाधिगम्यम् ॥ ५ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीकृष्णापञ्चकं संपूर्णम्

---

## ७१ श्रीकृष्णावेणीपंचगंगास्तोत्रम्

शिवा शिवा शिवप्रेष्ठा शिवायास्तु हताशिवा ॥
सर्वदा शेरते यस्यां सद्गुणाः सर्वदा हि सा ॥ १ ॥

नमामि सर्वतोभद्रां सुभद्राश्रयदां नदीं ॥
भद्राय साऽस्तु मे भद्रा सर्वाभद्रहरा वरा ॥ २ ॥

स्रोतस्वती भोगवती या सौभाग्यवती सती ॥
आभोगतापं सा मेऽस्तु उपास्या भोगवतीह या ॥ ३ ॥

कलुषाणीह सर्वाणि या कुंभयति सत्वरम् ॥
परशक्त्या स्रवन्ती सा भूयात्कुंभी शिवाय मे ॥ ४ ॥
स्रवन्ती या हतापाया पापहारिसरस्वती ॥
पुनातु सा हताम्नाया पापघ्नी सरस्वती ॥ ५ ॥
कृष्णा विष्णुतनुः साक्षान्महापापापहारिणी ॥
तारिणी दुर्गसंसारात्सा कृष्णा मुक्तयेऽस्तु नः ॥ ६ ॥
महेश्वरस्वरूपा या कृष्णया सङ्गता नदी ॥
सा वेणी सकलाघघ्नी तापघ्नी मुक्तयेऽस्तु नः ॥ ७ ॥
कृष्णावेणीपंचगङ्गास्तोत्रं सर्वाघहारि यः ॥
त्रिसंध्यं प्रपठेद्धीमान्स पवित्रो भविष्यति ॥ ८ ॥

इति श्री. प. प. श्रीवासु. कृष्णापंचगंगास्तोत्रं संपूर्णम् ॥

---

## ७२ कृष्णापञ्चगङ्गासंगमस्तोत्रम्

कृष्णाप्रवाहेऽत्र तु पञ्चगङ्गायुजिः प्रतीवारिरस्याप्सङ्ग ॥
गङ्गार्कजायुत्यधिपुण्यदात्री श्रेयोविधात्री सकलापहन्त्री ॥ १ ॥
तीर्थं प्रयागेन समं मनोहरं क्षेत्रं कुरुक्षेत्रसमं यतो वरं ॥
सद्यः कुरुक्षेत्रवराधिपुण्यदं त सङ्गमाख्यं प्रणमामि कामदम् ॥२॥
अदुम्बरः कल्पतरुर्यत्रास्ते चामरेश्वरः ॥
त्रिपुरेश्वरसमो यत्र शक्तितीर्थं च यत्र हि ॥ ३ ॥
यत्र श्रीसद्गुरोर्वासः सर्वाभीष्टार्थपूरकः ॥
सुतरां भ्राजतेऽनेन संगमोऽस्मै नमो नमः ॥ ४ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वती विरचितं कृष्णापञ्चगङ्गासङ्गम-
स्तोत्रं संपूर्णम् ॥

---

हरिहरदूता यत्र प्रेताश्चेतुं निजं निजं लोकम् ।
कलहायन्तेऽन्योन्यं सा नो हरतूभयात्मिका शोकम् ॥७॥

विभिद्यते प्रत्ययतोऽपि रूप-
मेकप्रकृत्योर्न हरेर्हरस्य ॥
भिदेति या दर्शयितुं गतैक्यं
वेण्याऽजतन्वाऽजतनुर्हि कृष्णा ॥ ८ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीकृष्णाष्टकं संपूर्णम् ॥

---

## ७४ नृसिंहवाटिकास्थशुक्लाद्यष्टतीर्थस्तोत्रम्

ब्रह्महत्याहरं तीर्थं कृष्णा पश्चिमवाहिनी ॥
यत्र तत्रैव शुक्लाख्यं स्नानाच्छुद्धिकरोति यत् ॥ १ ॥
ततोऽप्यधः पापविनाशि काम्यतीर्थं वरोदुम्बरसंनिधौ च ॥
सिद्धाख्यतीर्थं वरदं तथैवामरेश्वरस्याऽमरतीर्थमग्रे ॥ २ ॥
स्यात्कोटितीर्थं त्वथ शक्तितीर्थं प्रयागतीर्थं च ततस्ततोऽग्रे ।
यत्कूलस्थानि पञ्चनीरे महाष्टतीर्थानि महापहन्ति ॥ ३ ॥
न ब्रह्महत्यादिमहाघसंघो यद्दर्शनादेव निमेषमात्रम् ॥
स्थातुं यत्यशेषाघहराष्टतीर्थस्नानात्तु पुण्यं किमु वाच्यमत्र ॥४॥
नमोऽस्तु तीर्थाष्टक ते भवान्नु श्रीपादपादेशपवित्रकारि ॥
निवार्य पापं त्रिविधं समस्तं विज्ञानपात्रं कुरु मामिहैव ॥ ५ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचित
शुक्लाद्यष्टतीर्थस्तोत्र संपूर्णम् ॥

---

## ७५ नरसिंहवाटिकावर्णनम् ॥

मङ्गलायतन तेऽस्तु मंगला मङ्गलाय ननु यत्तमङ्गला ॥
मङ्गलायतनसर्वमङ्गलामङ्गला यत इता सुमङ्गलाः ॥ १ ॥

पांसुलं व्याप्तलोकं सद्विक्रमत्रातपांसुलम् ॥
भद्रदं पदमेतत्ते मम भूयादभद्रदम् ॥ २ ॥

अग्रजन्मासि भूतेश विश्वभृन्मानवोप्यहं ॥
अग्रजन्मास्यतो भूयाद्ब्रह्मन्संबन्ध आवयोः ॥ ३ ॥

नरसिंह इहाद्वैतनरसिंहः प्रभुर्यतिः ॥
कृष्णापञ्चनदीयोगे कृष्णाहारी कलौ युगे ॥ ४ ॥

धन्या यदान्याश्रितसारतीरा मान्यास्तदैन्यामृतसारनीरा ॥
कृष्णा वितृष्णान्हि विधाय भक्तान्पुष्णाति कृष्णाच्युतमूर्तिरेषा ॥ ५ ॥

मन्येऽत्र धन्येयमनन्तमूर्तिः स्वस्पर्शनालोकनकीर्तनाद्यैः ॥
दीनानिमान्पावयितुं स्वभक्तान्कृष्णात्र कृष्णाभिधनिम्नगाभूत् ॥ ६ ॥

यदात्मनोः प्रत्ययभेदभिन्नमेकप्रकृत्योः प्रथितं स्वरूपम् ॥
हरिर्हरो दर्शयितुं ह्यभिन्नं गतौ द्विनद्यैक्यमिवं तु कृष्णा ॥ ७ ॥

अष्टाङ्गयोगसिद्धिः कष्टा भिक्षाशिनां कलौ स्पष्टा ॥
नरसिद्धिदानि तीर्थान्यष्टातोसौ दधौ स्वभक्तेष्टा ॥ ८ ॥

(गद्यम्) भगवती श्रीकृष्णेयमेव भगवच्चरणावनेजनशोभन-जीवनोत्तमकलेवरामरेश्वराधिष्ठितप्रतीरसमग्रपुरसयोगवरमहन्दिराभितः प्रचुरसुंदरमंदिरालंकृतामितामरभूरुहमण्डितवासादितमनोहरनिर्जरसपद-मरनिम्नगेयं बभौ ॥ ९ ॥

या किल स्वीयजीवनचिन्तनकीर्तनदर्शनस्पर्शनसेवनादिना पवित्रीकृतबाह्याभ्यन्तरात्मन तथाविधस्वभक्तानज्ञानतः स्वलोकं प्रापयितुमुत्सुकान्याम्यान्दूतान्निवारयितुं तद्दिशं जिगमिषवीव ॥१०॥

सह्याद्रिकन्येयमसह्यवीर्या सुधाधिकस्वादुरसा पवित्रा ॥
स्निग्धातिमुग्धा महिषी नृपैः कैर्जानिमवत्आप्लवणांबुधेर्नो ॥ ११ ॥
तस्यास्तटे श्रीभगवान्नृसिंहसरस्वती तत्र पवित्रदेशे ॥
विध्वस्तजन्तुः खलु तन्निवासः स्वर्वासिवाधाधिसुखं तनोति ॥ १२ ॥
नद्याः सकाशाद्विपुलाचलामला रेजेऽत्र सोपानपरंपरा वरा ॥
रौद्रप्रयत्नै रचिताश्वमेधसत्पङ्क्तिर्यथैन्द्रं पदमारुरुक्षुभिः ॥ १३ ॥
यत्र महानन्दसंज्ञा मठास्ते दातुं महानन्दहीनामरेभ्यः ॥
महानन्दं केवलं सत्कृपातो गच्छन्तीवोर्ध्वं सतां वक्ति युक्तम् ॥ १४ ॥

(गद्यम्) सर्वदा किल जागरूकाखिलवरदामरनिकरकल्पतरुवर-जानहृदयकपूर्णाकालंकृतेऽस्मिन्सुगमापावृतकान्तपथे दैन्यपापतापा एवा-लब्धमार्गा अन्तः प्रवेष्टुं नो इतर इत्येतदेवात्र वैषम्यं व्यालोकि॥ १५॥

अत्र स्थखिला अपि भूसुराः अज्ञानध्वान्तध्वंसना इना इव, भवतापहराश्चन्द्रा इव, भौमा अपि सर्वमङ्गला इव, बुधा अपि निसर्गसौम्या इव, सुमापितभूषिताः सर्वगुरवो गुरव इव, वशकाव्याः कवयः कवय इवातिपीनस्तनजघनललनामण्डलाक्रमणमन्दा मन्दा इव स्थिता अत एवैकैकमहमण्डितं ग्रहमण्डलं स्फीताभ्यसूयं स्वस्व-सम्पस्वस्थामिवालक्ष्यते ॥ १६ ॥

सार्थको नाकलोकोऽयं नाकवार्तः परस्य तु ॥
नाकसंज्ञैव यत्रास्ते स्पर्धासूयात्ययाचकम् ॥ १७ ॥

यत्र रमरमेरनराः सुरा इव प्रीताः स्थिताः सेवितकामितामृताः ॥
संगीतयुक्ते सुधियः स्वया श्रियः साध्व्योऽपि सच्छीलजिता-
मृतांगनाः ॥ १८ ॥

यत्रायमात्मा सुखसच्चिदात्मा सन्दृश्यतेऽजः शतसूर्यतेजाः ॥
सत्वप्रधाने हृदि सावधाने मठेव भिक्षोः श्रुतिमिरिततिक्षोः ॥ १९ ॥

देवोऽमरः सहस्राक्षः परितो निर्जरैर्वृतः ॥
त्रिलोकार्चितपादाब्जो मघवेवापरोस्त्ययम् ॥ २० ॥
धर्मराजो दण्डधरः समवर्ती यमेश्वरः ॥
सर्वदा ज्ञातदेवात्मा जयत्यत्रापरो यमः ॥ २१ ॥
पश्यन्सत्यानृते कर्मयन्त्रिस्थानां नृणां स्फुटम् ॥
नारायणोयं जयति प्रचेता इव पाशभृक् ॥ २२ ॥
मनुष्यधर्मो देवोऽपि श्रीदः पुण्यजनेश्वरः ॥
राजराजो जयत्यत्र नरवाह इवापरः ॥ २३ ॥
मालाकमण्डलुधरो विधुर्वेदपरायणः ॥
सदानन्दो गतच्छन्दो ब्रह्मेवात्र वपरिथतः ॥ २४ ॥
नारायण इवाशेषसेतुहेतुरयं हरिः ॥
विश्वरूपो ह्यखलः सदा भक्तमतानुगः ॥ २५ ॥
मृत्युंजयोऽमृतमयः शंकरस्त्रिपुरान्तकः ॥
सर्वज्ञो जितकामोयं वशी शंभुरिवापरः ॥ २६ ॥
सृष्ट्वात्मेदं प्रविश्यांतर्मायया क्रीडतीह सः ॥
पद्भ्यामेव पाति स्वान्प्रज्ञानब्रह्मवाचकः ॥ २७ ॥
पादपत्यं स्वार्थसिध्यै द्रुमाणामितरे विदुः ॥
पादपत्वं स्वर्थसिध्यै सत्पतेर्नेतरे विदुः ॥ २८ ॥

(गद्यम्) स एव परमकारुणिको भगवान् जगद्गुरुः केवलयुक्तया युक्त्या इह हि परस्परं विवदतामसतां शास्त्रिणां मतानि निराकुर्वन् स्वभक्तानां विमलदृष्ट्यैव स्वपदपर्यालोचनान्मुक्तिरिति श्रुतितात्पर्यमुपदेष्टुमिव सच्चिदानन्दं पदमिह प्रकटीचकार ॥ २९ ॥

परमात्मन इवास्य श्रीगुरोः, प्रबोधसमय इव शिबिकोत्सवसमये, विशुद्धज्ञानदीपैरिव प्रदीपैः प्रकाशिते सत्त्वप्रधानान्तर इव शिबिकान्तर

उपविष्टं स्वप्रकाशापरोक्षात्मानमिव सर्वात्मानं षड्विधलिंगतात्पर्याव-धारणरूपश्रवणमननिदिध्यासनसमाधिक्रमगतचरमवृत्त्यैव केवलामल-दृष्ट्यापरोक्षीकुर्वंत इव पश्यन्तो, यतय इवोच्चावचजन्तवो विस्मृत-बाह्याभ्यन्तरव्यवहाराः सन्तो ब्राह्मीं स्थितिमिव परमानन्दस्थितिं प्राप्नुवन्त्यहो महदाश्चर्यमिदम् ॥ ३० ॥

किंचित्स्वप्नेऽपि येनाप्तं योगसाधनकारणम् ॥
समाधेस्ते पराकाष्ठां प्रापुर्ध्येयैकगोचराः ॥ ३१ ॥

पेशलैः कापिलालापैः किं शेषाशेषभाषितैः ॥
किं चान्यैरेष्य एवैका तारिका वाटिका हरेः ॥ ३२ ॥

(गद्यम्) भगवत्पददिदृक्षया परमवादिगमान्नित्यानित्यवस्तुविवेकस्तत्र यदृच्छयाप्तमाधुकरान्नसेवनादिहामुत्रार्थफलभोगविरागविषणमघहरणकाष्णींणोनिषेवणाच्छमादिसंपन् संपन्नजनसेवितकान्तानन्तायतनालोकनान्मुमुक्षुत्वं नारायणार्हणप्रेक्षणात्परोक्षज्ञानमज्ञानध्वान्तध्वंसनजनार्दनपदालोकनमपरोक्षज्ञानमिति किमतः परं परं साधनम् ॥ ३३ ॥

अध्वैव यदिदं कर्म कार्यं सत्पददर्शनम् ॥
विमनोवासनस्तज्ज्ञो न प्रमाद्येदतोऽनिशम् ॥ ३४ ॥

कुतो मोहः कुतः शोकः कुतः कामः कुतो भ्रमः ॥
कुतः संशय एतस्मिन्पदे दृष्टे परात्परे ॥ ३५ ॥

कन्दर्पदर्पदलितागलिताङ्गनाङ्ग-
सम्बन्धबन्धनवशा अवशास्त आपुः ॥
नेदं पदं परमया रमयापि येन्धा-
स्ते हन्त हन्त कुधिया विधियान्त्यघोघः ॥ ३६ ॥

लुलल्लालं लीलाललितललनालोलल्पनं
क्व कीलालेद्वालो ललद्मललीलोलितिलकः ॥
क्व लोलालिप्रालिर्लुलितकलिभालः क्व मललं
बिलं लोलन्मूत्रं क्व कनकघटौ मांसलकुचौ ॥ ३७ ॥

(गद्यम्) अहह मूर्खप्रतारणेयं पश्य पश्य सन्ध्रघटकल्पं संघाणपिञ्जूषादिलिप्तं श्लेष्मलमलद्वाराद्यानीतशोभं मलीमसं लपनं निष्कलंककलानिधिरिति, मांसलौ मुक्तावल्यादिराजितौ स्तनगोलौ स्वर्णकलशाविति, चर्मशकलं द्विधा भिन्नं गलन्मूत्रमपानोद्गारधूपितममूल्यचैलतिरोहितं कृमिकुलस्थलकल्पं गलन्मदकरिगण्डस्थलमिति, हिंसवञ्चनार्थं त्वगावृता रक्तमांसास्थिघटितात्यमङ्गला मङ्गलमात्रपवित्रा ममताहन्तावृता स्वपरमूर्तिरियमासेचनककनकमूर्तिरिति, भ्रान्त्यैव पश्यन्त एतान् भ्रष्टपथानसतो धिग्धिगहो हर हर हरिमायेयं किल ज्ञानिनामपि चेत्स्खलतीति महर्षिवाक्याय शतशो नमो नमः ॥ ३८ ॥

त्यक्तानित्याशुचिदुःखमयोभयलोकभोगसाधनसंगा दुस्तरैषणापारगा परावृतत्वरतरासुरस्मरशरविसरवर्गा भगवद्दर्शनमात्रकामाश्रितवाटिकायोगा अश्रान्तमाप्तभगवत्प्रसादाभोगा वदितपरमार्थभागा निःसङ्गा अमी नरसिंहवाटिकास्थिताः सर्वेऽपि नरसिंहसरस्वतीयतिगुरुप्रसादेनैव कृतकृत्याः स्युः ॥ ३९ ॥

प्रेतोऽस्ति नास्तीति यथास्य संशयस्तथा यदन्तस्य च निर्गुणाकृतेः ॥
तद्भूशरासाद्धि कटाक्षमार्गणैर्विद्धा न चाद्धा यतयो नमोऽस्तु वः ॥ ४० ॥
धन्या हि संन्यासिन एव यद्दृढवर्माण एतैरसुरैर्न विद्धाः ॥
विद्धा हरीशाजमुखाः किलैतैः पुनर्मृतप्रायनृणां कथा का ॥ ४१ ॥
तस्मान्न चास्मात्प्रपदाच्छरण्यान्न कायनं नास्य शरण्यमीश ॥
नियोजयानेन पदा सदा मां तवान्तिकस्थेन सुदुर्लभेन ॥ ४२ ॥

कृष्णावेणीककुद्मत्यः प्रपंचोपशमान्तिके ॥
अखण्डैकरसा ऐक्यात्परात्मानात्मवच्छिवाः ॥ ४३ ॥
यज्ञाङ्ग आगमस्तत्र सदा सेव्यो द्विजातिभिः ॥
अन्तरप्राकृतैः पूर्णो बहिश्च प्राकृतैः फलैः ॥ ४४ ॥
सेव्योयमागमो नित्यमर्थहीनैर्द्विजातिभिः ॥
सार्थैस्तु ब्राह्मणैः सेव्यं तद्विष्णोः परमं पदम् ॥ ४५ ॥
इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीमन्नृसिंहवाटिकाक्षेत्रवर्णनं संपूर्णम् ॥

---

## ७६ सप्तपुरीस्तोत्रम् ॥

स्या अ योध्ये रामपाद [illegible] पु नीतेऽमृतत्वदा ॥
भू यो मास्तु ममापूर्तिः पु री पु सरयूप्लुते ॥ १ ॥
आ ध्या नान्मथुरे ते मे स द्वा सोऽस्तु निरंतरम् ॥
[illegible] म कृष्णांघ्रिसंपूते व र दे यमुनाप्लुते ॥ २ ॥
पू थु मार्गं प्रदा माये भ य भागीरथीप्लुते ॥
व रा सि त्वां हरिद्वार मु सी थं प्रवदंति हि ॥ ३ ॥
[illegible] मा पं हर काशि त्व मुष्म पे हसमणिकर्णिके ॥
भू या न्न मे पुनर्जन्म म य पादांचिते भवे ॥ ४ ॥
सा का श्चीनगरी मह त्रा स हा शिवविष्णुपूः ॥
आ शीः प्रदाप्य मां कृत्वा स्तु मै नसमशस्त्रियम् ॥ ५ ॥
सो का वरानपेक्षं मां म सा कालेश्वरादृता ॥
मा घी र्मंतपसं पातु मां मो हात्क्षिप्रयाद्दता ॥ ६ ॥

स्वा ज नंताश्रये मेध मो क्ष दा सिंधुतीरगे ॥
त्वं वं धारयखिलैः सर्व प्र दा द्वारवतीश्वरि ॥ ७ ॥
य वि राड्राजधान्याद्यं [illegible] य कृष्णातटस्थिते ॥
को का माहात्म्यमाहुस्त्वां लो का नृसिंहवाटिकां ॥ ८ ॥
कर्मभिर्नृत्यंति नरस्तत्रसि मायाख्यबंधनम् ॥
इंवि यस्तद्वाटिकेयं सर्वेषां हितदा सदा ॥ ९ ॥

इति श्री. प. प. वासुदेवानदसरस्वतीविरचितं
नृसिंहवाटिकान्वितसप्तपुरीस्तोत्र सपूर्णम् ॥

---

## ७७ वेदगंगास्तुतिः

वेदगंगे नमस्ते मे वेदगंगे भवत्यघम् ।
हर तत्वं विधिश्रीशहरतत्व प्रकाशय ॥ १ ॥

---

## ७८ हिरण्यकेशीस्तुतिः

हिरण्यकेशाः कमपाद्यमेध हिरण्यकेश्या यहचोक्ततत्वम् ।
आदित्यवर्णं तदवेक्षणाद्देमादित्यवर्म्मा विदधातु शुद्धम् ॥ १ ॥

---

## ७९ मलापहास्तुतिः

मलापहा महासिंधुः सर्वजन्ममलापहा ॥ १ ॥
हरतु त्रिविधं पापं तापं च त्रिविधं मम

---

## ८० घटप्रभास्तुतिः

घटप्रभांतु मे कुर्यात् सद्यो हेमघटप्रभाम् । ॥ १ ॥
उपलब्धि यतो भूम्न उपलब्धिर्भविष्यति

## ८१ विश्वामित्रिस्तुतिः

विश्वामित्र्याः करोत्वंभो विश्वामित्र्या ऋचोहिताम् ।
प्रचोदनां सति दृढां हित्वा कर्मप्रचोदनाम् ॥ १ ॥

## ८२ तुंगभद्रास्तुतिः

भद्रया राजते वीच्या तुंगया सह भद्रया ।
तुंगभद्रा धुनी सा मां तुंगभद्राश्रयं क्रियात् ॥ १ ॥

## ८३ बाहुदानदीस्तुतिः

सदानीरा लघुतला सदा नीरागहृज्जला ।
बाहुदाख्यावतु मुनिबाहुदास्मानियं धुनी ॥ १ ॥

## ८४ करतोयानदीस्तुतिः

प्रायशो वहति या करतो या शुष्यतीह न जलाकरतोया ।
पावनी बहुसुखाकरतोया पातु साधनिचयात्करतोया ॥ १ ॥

करतोये सदातोये बहुशोऽये पुरामये ।
दोषा मे ये कृतास्तेषां सर्वेषां त्वं भवान्तकृत् ॥ २ ॥

यया छिन्नो बाहुर्न्नृपय इह दत्तो हि दयया
नदी सेयं मायामयमयलया नित्यविजया ।
अपायान्मां पायात् सततनिरपायामृतपया
सदातोया पेया जगति करतोयाघविलया ॥ ३ ॥

## ८५ भार्गवीभार्गवक्षेत्रस्तुतिः

मार्गवीबाहुदायोगे भार्गवं क्षेत्रमुत्तमम् ।
यत्रोर्वशी क्षितौ यत्र तत्रेश्वरगदाधरौ ॥ १ ॥

परिपिपालयिषुर्जगतः स्थितिं महति यत्र तु शेषधरे स्थितिम् ।
हरिजो व्यकरोच्चत आहृता सरिदसौ भृगुणाप्यघभीहृता ॥ २ ॥

स्वमातृहत्याकलुषाश्रयाशदन्दह्यमानो भृगुनन्दनोऽभूत् ।
रामः प्रशांतोऽलघयिष्यतात्र भुवो भरं तेन यशं च लब्धम् ॥ ३ ॥

प्रविष्टमात्रस्य नरस्य तीर्थं दन्दह्यमानानि महान्त्यघानि ।
प्रयान्ति नाशं जगतीह धन्यं श्रीभार्गवक्षेत्रमिहानवद्यम् ॥ ४ ॥

---

## ८६ वेंकटेश्वरस्तुतिः

वें ह्यव्ययं पापवाच्यमेतत्कटति वेंकटः ।
कटतेर्नाशनार्थत्वात्पापहा वेंकटेश्वरः ॥ १ ॥

परिपिपालयिषुर्जगतः स्थितिं य च चकार ह शेषधरे स्थितिम् ।
द्रुतविलंबितगेन मया क्षितौ स खलु वेंकट ईश्वर ईक्षितः ॥ २ ॥

---

## ८७ कालहस्तीश्वरस्तुतिः

जंबुद्वीपे भारताख्येऽत्र वर्षे ह्यैंणाख्यात्याम्यभागे स्वयर्ये ।
प्रत्यक्षश्रीकालहस्तीशसंज्ञः शंभुर्यत्राऽगोऽपि कैलाससंज्ञः ॥ १ ॥

सुवर्णमुख्यासरितोऽविदूरे प्रासाद आस्ते सति याम्यतीरे ।
नगोऽपि तद्दक्षिणतोऽप्यदूरे यस्मिन्निवासोऽस्ति सदा स्मरारेः ॥ २ ॥

यथा गौरीश ते धाम स्माधरे शिव राजते ।
राजते तद्वदत्रापि राजते देवराज ते ॥ ३ ॥

कैलासशैलादवतीर्य भक्तिप्रियो हरोऽस्यात्सगणः सशक्तिः ।
यः कालहस्तीन्द्रहरिः स पायाच्छ्रीकालहस्तीश्वर आश्वपायात् ॥४॥
यस्येक्षणेऽप्यापि नरस्य जाताः सद्यो विनश्यंत्यखिलाः सपापाः ।
दुर्दैवदैन्याद्यखिलं प्रकामं निवार्य यः पूरयति स्वकामम् ॥ ५ ॥

## ८८ शिवविष्णुकांचीस्तुतिः

कांचीपुरीमहं मन्ये कांचिदेकां विभोः कलाम् ।
विकला अपि यद्योगा सकलात्मत्वभाजनम् ॥ १ ॥
कांची यथा हि वक्षोर्ध्वं युवते राजते कटौ ।
कांची तथाऽधिवसुधाया वसुप्रान्ते विराजते ॥ २ ॥
पंचमी मुक्तिपुर्येषा पंचमी योगभूरिव ।
पश्यता तस्य न पुनः पश्यतात्रास्य जन्मिनः ॥ ३ ॥
शिवविष्णुपुरी कांची कांश्चिन्चित्तां हरेश किम् ।
न किंचिदपि यद्दृष्ट्वा पापं तिष्ठति देहिनाम् ॥ ४ ॥
वाराणसी मुक्तकाशी पापराशीविनाशिनी ।
तथा दक्षिणकाशीयं मुक्तिद्वारमपावृता ॥ ५ ॥
अतिवेगवतीयमशाम्यां वेगवती सरिदत्र हि कांच्याम् ।
सतिवेगवती गुरुगीता वेगवतीं मिरमात्मनि कुर्यात् ॥ ६ ॥
एकाम्रकेशाभिधभूमिलिंगं यामाम्यभीष्टार्थदमात्मलिंगम् ।
सपर्याविद्यावरणं निरस्य प्रदर्शय स्वात्मनि मे चिरस्य ॥ ७ ॥
वरदराजवराजितदुर्हरं वरदराजमुपाश्रितसम्पदम् ।
वरदराजिकरं प्रणमाम्यजं वरदशान्तवरं समघोऽग्रजम् ॥ ८ ॥
परिहृतविनतार्तिर्वारितस्त्रीयजूर्तिर्भुवनरचितमूर्तिर्भक्तरामप्रपूर्तिः ।
जयति वरदराजो भक्तचित्तानुवर्ती निजभजकपतिर्दिङ्मालिनी
यस्य कीर्तिः ॥ ९ ॥

## ८९ पक्षितीर्थस्तुतिः

यत्र शंखाभिधं तीर्थं यत्र वेदगिरिर्महान् ।
भक्तवत्सल ईशश्च पक्षितीर्थं तदुत्तमम् ॥ १ ॥
विधेः सुतौ शंभुशापाद्विधे. कंकत्वमेत्यसौ ।
भक्तदत्तं गृण्हतोमो भक्तमन्यहमत्र हि ॥ २ ॥
मांशुवेदगिरेः शीर्ष्णं निषेव्य महाचर्यतः ।
शिवमात्मानमित्र यः पश्येत्स गतिमाप्नुयात् ॥ ३ ॥

## ९० पिनाकिनीस्तुतिः

कांच्यामवाच्यामघहन्त्रुनी यास्ति पयस्विनी ।
याप्राची दक्षिणा चापि पुनात्यस्मान् पिनाकिनी ॥ १ ॥

## ९१ अरुणाचलस्तुतिः

काश्यां मुक्तिर्मरणादरुणाचलस्याचलस्य तु स्मरणात् ।
अरुणाचलेशसंज्ञं तेजोलिंगं स्मरेत्सदामरणात् ॥ २ ॥

## पिनाकिनीस्तुतिः

द्विधेह संभूय धुनी पिनाकिनी द्विधेव रौद्री हि तनुः पिनाकिनी ।
द्विधा वनोरुत्तरतोपि चैको यस्याः प्रवाहः प्रववाह लोकः ॥ ३ ॥
प्राचोत्तरा तत्र पिनाकिनी या स्वतीरगान् संवसतान्पुनाती ।
अस्याः परो दक्षिणतः प्रवाहो नानानदीयुक् प्रववाह सेयम् ॥४॥

लोकस्तुता याप्यपिनाकिनीति स्वयं हि या सागरमाविवेश ।
मनाक् साधनार्ति विना पापहन्त्री पुनानापि नानाजनाद्याधिहन्त्री ।
अनायासतो या पिनाक्याप्तिदात्री पुनात्वंहसो नः
पिनाकिन्यवित्री ॥ ५ ॥

अरुणाचलतः काञ्च्या अपि दक्षिणदिक्स्थिता ।
चिदम्बरस्य कावेर्या अप्युदग्या पुनातु माम् ॥ ६ ॥
याधिमासवशार्धेऽब्द्यां कृतक्षौरस्य मेऽल्पका ।
स्नापनाय क्षणाद्वृद्धा सा ह्यासेव्या पिनाकिनी ॥ ७ ॥

## ९२ चिदम्बरस्तुतिः

चिदम्बरस्य चिन्ता नो जाड्यं हित्वा व्यदर्शयत् ।
सर्वव्यापकतां तस्य चिन्तनीयं चिदम्बरम् ॥ १ ॥
यद्यास्तमया माया सती चित्स्वप्रभाद्वया ।
अम्बराभा सुता तस्य चिन्तनीयं चिदम्बरम् ॥ २ ॥
सुखं नित्यं निरस्त्रपं भूमैव निरुपाधिकम् ।
स्वरूपमेव यत्तस्य चिन्तनीयं चिदम्बरम् ॥ ३ ॥
पायाद्म्बरलिङ्गं नो यच्चिदम्बरनामकम् ।
शेषशायिप्रभृतिपुंदोषहारिसुरावृतम् ॥ ४ ॥

## ९३ कावेरीस्तुतिः

कावेरी निम्नगा वारिलहरीपापहारिणी ।
तारिणी पापिनामेनां भजेहं पापहारिणीम् ॥ १ ॥
स्वसा कृष्णानद्याखिलजगदवद्यामितगुणा
स्वसाराधावद्यामखिलमलपद्यामतिघृणा ।
नृणां गोप्याच्छाद्य दममसृतपद्यां हितकरी
व्यधात्सा कावेरी सरिदवतु नः पुण्यलहरी ॥ २ ॥

उदीचीस्था गंगा पृथुतरतरंगाविकपटा
भटान्याम्यानुच्चैर्दरकलगिरा या जयति हि।
इयं कावेरी तु प्रसभमपि तानंतिकगता-
न्निरस्यं स्वर्लोकं नयति निजलोकं श्रुतिमता ॥ ३ ॥

अतो जल्पं जल्पं सरिदमृतकल्पं तव यश-
स्तटे भ्रामं भ्रामं तव खलु निकामं शुचि यशः।
मुदा मज्जं मज्जं तव पयसि जन्माघकहरं
सदा स्मारं स्मारं तव भवहमाहात्म्यमवरम् ॥ ४ ॥

अये कावेरि त्वत्तटसमटनादेवमनिशं
नयेत्कालं मेलं तव किल जलं पुण्यधुनि शम्।
तटे श्वेतारण्यप्रमतिवरकाशीसदृशपुण्-
महाक्षेत्राण्यन्यान्यपि तव जयंत्याधिविलये ॥ ५ ॥

कावेरि सिन्धो ननु दीनबन्धो कारुण्यसिन्धो भवघोरसिन्धोः।
मां तारय त्वं पतितोमहस्ते तत्राप्यपेक्षार्हति साध्विनस्ते ॥ ६ ॥

पतितोद्धरणाय साध्वि चेदवतारस्तव भूतले न चेत्।
पतितं हि समुद्धरिष्यसि न जनुस्त्वं विफलं करिष्यसि ॥ ७ ॥

कुम्भादिकन्ततामिहाघरणीयममे
नेष्येव सद्गतिमितीच्छसि चेत्स्वधर्मे।
बध्नि प्रसह्य खलु सह्यसुते पुनासि
त्वं सह्य इत्यपिरचो विमतं करोषि ॥ ८ ॥

दीक्षा गृहीताजगरी गरीयसी यद्रोधसि श्रीगुरुणारुणाम्भसा।
कायाधवायापि मुहुर्निरस्तुवन् कावेरिकां त्वां खलु वासुदेवः ॥९॥

---

# वेदान्तस्तोत्राणि

## ९४ वेदांतपररामायणम्

दशेंद्रियरथो देही राजा दशरथः स्मृतः ।
कौसल्या तत्प्रिया बुद्धी रामस्तत्रोद्गतः परः ॥ १ ॥
धृत्वा सीतां स्वानुभूतिं सुखमास्तेऽथ दैवतः ।
संसारविपिने प्रापाहंकारो रावणाभिधः ॥ २ ॥
राजसः स्वानुभूतिं तां सीतां यत्नाज्जहार ह ।
रामः परात्मापि ततः स्वानुभूतिवियोगतः ॥ ३ ॥
प्राप्तो दीनदशां दुःखी शुशोच विरहातुरः ।
परिभ्रमन्हनुमता विवेकेन च संगतः ॥ ४ ॥
तेन सीताख्यानुभूतिरित्यस्तिवार्ता प्रदर्शिता ।
ततो वानरसद्वृत्तिसैन्येन च हनूमता ॥ ५ ॥
सेतुं बध्वा स जलधौ साधनाभ्यासरूपकैः ।
ततो भवाब्धिमुल्लंघ्य दीप्तज्ञानाग्निना भृशं ॥ ६ ॥
सूक्ष्मदेहाख्यलंका च दग्ध्वोपनिषदस्त्रतः ॥
कामक्रोधादिरक्षांसि हत्वा युद्धे सहस्रशः ॥ ७ ॥
सात्त्विकाहंकारविभीषणसाहाय्यतस्ततः ।
कुंभकर्णं तामसाहंकारं राजसमप्यथ ॥ ८ ॥
निहत्य रावणं स्वानुभूतिं सीतां प्रगृह्य च ।
रामः स्वरूपसाम्राज्येऽभिषिक्तोऽरीरमत्तया ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं वेदांतपररामायणं संपूर्णम् ॥

## ९५ वेदांतपरभागवतम्

वसुदेवः शुद्धसत्त्वं तच्चित्तिर्देवकी मता ॥
कृष्ण आत्मागतस्तत्र पितृबन्धविमोचकः ॥ १ ॥
गोकुलं प्रापितोऽथापि दैवात्पित्रेन्द्रियाभिधम् ।
सद्वृत्तिसात्त्विकात्मालययशोदानन्दवात्मज् ॥ २ ॥
दुर्वासनापूतनाघ्नो रेमे गोप्यात्मवृत्तिभिः ॥
विलीय सत्सङ्गितगोरक्षाद्गोगोपपालकः ॥ ३ ॥
नानाकौतुककृद्दुर्हृद्वृत्तिवृन्दावने स्थितः ॥
गोप्याशापूरकोऽविद्यानिशायां चित्तरासकृत् ॥ ४ ॥
गोप्योर्द्वयोर्द्वयोर्मध्ये वशस्तत्तनुरूपवान् ॥
रेमे दैवात्तद्वियुक्तो दुर्हृत्प्राप्तपितृसंगतः ॥ ५ ॥
भवाब्धिमध्ये देहाख्यां कृत्वा द्वारवतीं पुरीं ॥
सोऽनुप्रविष्टस्तां वृत्त्याख्या विविधाः स्त्रियः ॥ ६ ॥
सर्वाः पतिव्रताः कान्तं मेनिरे तं वशीकृतम् ॥
आत्मारामोऽप्यसङ्गोऽपि ततो दीन इवाबभौ ॥ ७ ॥
षोडशस्त्रीसहस्रेशः संसारं समवर्धयत् ॥
परोद्देशकृत्पञ्चप्राणपाण्डवपालकः ॥ ८ ॥
हरीकृत्य ब्रह्मशापं विभाव्य स्वजनान् क्षणात् ॥
पुरीं द्वारवतीं चापि कृष्ण एकस्ततः स्वयम् ॥ ९ ॥
हृत्पाण्डवसारोगाद्वैकुण्ठं पूर्णधाम वन् ॥
भक्तः स्मृत्वा भगवत्संकथेदं सदा पठेत् ॥ १० ॥
भवार्तिहृद् भागवतं स नूनं भवमर्जकः ॥

---

## ९६ वेदांतपरत्रिवेणी ॥

इंद्रियाणां जडानां च विषयाणां च तादृशां ॥
वैरस्यं ज्ञानपूर्वं यद्विरक्तिः सा प्रकीर्तिता ॥ १ ॥
जडोपाधेश्वरादूदृश्याद्बुद्धिवृत्तिं निवर्त्य च ॥
चैतन्यप्रवणा कार्या भक्तिः सा परिकीर्तिता ॥ २ ॥
सर्वांशरोऽस्मि घनचित्प्रकाशात्मेति या मतिः ॥
महावाक्यविचारोत्था सात्मज्ञप्तिः प्रकीर्तिता ॥ ३ ॥
एता हि यमुनागंगासरस्वत्योऽत्र संगताः ॥
त्रिवेणी सैव तत्रैव स्नानाद्द्रागाद्यघक्षयः ॥ ४ ॥
गुणत्रिवेणीस्नानं धीस्त्रियः कुर्यात्पुमानिह ॥
पातकेच्छोद्भवो नास्य पुनरन्यत्र तूद्भवः ॥ ५ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचिता
वेदान्तत्रिवेणी संपूर्णा ॥

---

## ९७ मानसपूजा

अथ प्रबोधः

अजितामृत योगनिद्रितास्त्युतशक्तेः स्वकृताविमोहित
ह्यसुरे श्रुतिवन्दिगीततो भगवञ्जागृहि जागृहि स्ययीद् ॥ १ ॥

अथ ध्यानम्

यतोऽस्य जननाद्यजः स्वशरमाय आद्यो विभुः ।
स्वराट् सकलविद्गुरुः स सुरसार्चिदात्मा प्रभुः ॥
असंसृतिविरूप छन्द्मितमलोऽमुमैक्याप्तये
निवर्त्य नयनं निषेधविधिवाक्यतश्चिन्तये ॥ २ ॥

अथावाहनम्

कार्यक्षमान्वीक्ष्य पृथग्युतान्वा योऽनुप्रविश्याथ विभुर्निजांशात् ।
निन्ये प्रभुत्वं हि महन्मुखांस्तमुपाह्वये श्रीशमनन्यचित्तः ॥ ३ ॥

अथासनम्

अनेजज्जवीयो ह्यदोऽप्याप्नुवन्नो सुराः पूर्वमर्शत्पराक्षोऽपि तिष्ठत् ।
परान्धावतोऽत्येति यद्ध्यासनं ते ह्यधीशार्पितं चित्तमस्तान्यवृत्ति ॥४॥

अथ पाद्यम्

राहोः शीर्षधरोपधारिकमिदं विष्णो पदं श्रीश ते
मत्स्यत्वञ्च निसर्गशुद्धमपि सन्मायांशतोऽशुद्धवत् ॥
भातं मूढधिया तदर्थममले ज्ञानामृतं यत्नतो
धीपात्रेण हिरण्मये विनिहितं पाद्यं गृहाणात्मन ॥ ५ ॥

अथार्घ्यम्

देवाचार्यप्रसादप्रजनितमुरसंपद्विसद्रत्नजात-
श्रेण्याढ्ये मञ्जुलेऽस्मिन्नतितरविमले भाजने वै विशाले ॥
चेतःसञ्ज्ञेऽविलोले धृतभजनसराद्वैतवार्यर्थजाले
ह्यर्घ्यं संपादितं ते ह्यधिप परम भोः स्वीकुरुष्वाप्तकाम ॥ ६ ॥

अथाचमनम्

विधिवच्छ्रवणादि यत्कृतं ते ह्यधिपाभव मे प्रसीद शंभो ॥
त्रिविधावरणाम्बु तेऽर्पितं सत्कृपयाऽऽचमनं कुरुष्व तेन ॥ ७ ॥

अथ स्नानम्

प्रवचनादिसुदुर्लभताश्रुतेरध्यधिपते त इह श्रुतिविप्लुते ॥
परमभक्तिसुशीतलसज्जलं वपुषि सिक्तमयाऽऽप्लुतयेऽस्त्वलम् ॥ ८ ॥

अथ वस्त्रम्

यत्किञ्चिज्जगति श्रीश तत्त्वया वास्यमीश वै ॥
वस्त्रत्वेनार्पितं तेन परानन्दार्हतास्तु मे ॥ ९ ॥

अथ प्रदक्षिणा

त्वं श्रीशोऽहमहं त्वमित्यथगतेः स्येम्ने निदिध्यासना-
स्नानस्ते परिदक्षिणा हि विहिता यद्यच्च मे क्रीडितम् ॥
तद्ब्रह्मास्तु चिदन्वये त्रिपुरथोत्थानुस्मरन्व्याहरे
तारं तारकमेकमात्मनि यथा शार्दूलविक्रीडितम् ॥ १७ ॥

अथ नमस्कारः

असकृदभिहिता तेनेकजन्माप्तपुण्यैः प्रणतिविततिरेवाद्वैतबोधाविशेषा ॥
त्वयि विनिहितमेतन्मे न रावं स्वर्गीयं च्यविष जयतु पूजा त्वद्यशो-
मालिनीयम् ॥ १८ ॥

अथ क्षमापनम्

यन्मे न्यूनं समस्तं स्थूलदृष्ट्या भूमन्स्तेनुक्रोशापीयूषदृष्ट्या ॥
नित्यं श्रेयः स्वप्रभं शालिनीयं वस्त्याभूत्संपूर्णताशालिनीयम् ॥ १९ ॥
बोधनं ह्यात्मनः शोधनं चात्मनः पूजनं ह्यात्मनो भोजनं स्वात्मन ॥
यत्र सैषात्मपूजास्तु कण्ठे सतां स्रग्विणी मापरा श्रीय कंठेऽसताम् ॥ २० ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचिता
आत्मपूजा सम्पूर्णा ॥

---

९८ ब्रह्मसूत्रम्

चित्तूलजातं यदु चित्तवृत्तं त्रिवृत्कृतं येन च सूत्रजातम् ॥
परपूर्वजातं यदु नैव जातं तद्ब्रह्मसूत्रं द्विज देहजातम् ॥ १ ॥
त्रिलोकसूत्रं ननु यद्गुणाग्र्यं त्रिगुणताग्र्यं नवदेवताग्र्यम् ॥
षट्के त्रिमात्रे गदनन्तमात्रं तद्ब्रह्मसूत्रं द्विज देहजातम् ॥ २ ॥

प्रजापतेर्यत्खलु पूर्वजातं यज्ञोपवीतं सहजातमात्मम् ॥
सत्वेन युक्तं त्रिगुणेन शक्तं तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ ३ ॥
दक्षोध्दृतं चेद्यदु विश्वमूलं सदा पवित्रं प्रकरोति सूत्रम् ॥
एनोऽखिलं भञ्जतैकपात्रं तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ ४ ॥
यद्ब्रह्मसूत्रं यदु वस्तुतंत्रं यतः स्वतन्त्रं परतन्त्रयन्त्रम् ॥
तमाहुरत्रेः परमं सुपुत्रं तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ ५ ॥
यमत्रिपुत्रं स्तुवते पवित्रमसाध्वमित्रं किल साधुमित्रम् ॥
अतीव चित्रं सुविचित्रगात्र तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ ६ ॥
अनन्यया सूत्रमिदं पवित्रं भक्त्या धृतं चेत्सुविशुद्धगात्रम् ॥
भवेत्सविश्वासात्स पवित्र एव तद्ब्रह्मसूत्र द्विज धेह्यजातम् ॥ ७ ॥
स ब्राह्मणो यो मनसा बिभर्ति यद्वा नरो यो वचसा बिभर्ति ॥
यद्वाप्यदंभः श्रवसा बिभर्ति तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥८॥
द्विजोऽपि चेद्येन विवर्जितः स चण्डाल एवास्य च धारणेन ॥
सद्ब्राह्मणत्वं खलु हीनजातेस्तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ ९ ॥
नवसूत्रमहोरात्रं योऽत्रिपुत्रमयं द्विजः ॥
ब्रह्मसूत्रमिदं धत्ते स यातीह पवित्रताम् ॥ १० ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचित
ब्रह्मसूत्र संपूर्णम् ॥

---

## ९९ षट्पञ्चाशिका

ध्याता सच्चिन्मुखो दत्तो रक्तोष्णाकाशदीपवत् ॥
मायाविघ्नैर्हृदाऽसंगः वह्निश्चिन्ने यथा ध्रुवः ॥ १ ॥
भवाध्वतापश्रान्तस्य सीताराम. समाश्रय. ॥
भयाध्वतापश्रान्तस्य शीताराम: समाश्रयः ॥ २ ॥

भवांबुधिनिमग्नस्य तारिणी भगवत्कथा ॥
यथांबुधिनिमग्नस्य तरणिर्विधिचोदिता ॥ ३ ॥
भवतापाभितप्तस्य शरणं न गुरोः परम् ॥
दवतापाभितप्तस्य शरणं न घनात्परम् ॥ ४ ॥
रोचते सुविरक्तस्य न सांसारिकपुंकथा ॥
यथा पित्तज्वरार्तस्य सुरसान्नादिसत्कथा ॥ ५ ॥
शृणोति सर्वं संन्यस्य श्रुतिवार्तां स आदरात् ।
परव्यसनिनी नारी जारवार्तां यथाऽऽदरात् ॥ ६ ॥
कथंचन त्यजेन्नैव विवेकी शान्तिगेहिनीम् ॥
यथा कामाभिसंतप्तोऽविवेकी कान्तगेहिनीम् ॥ ७ ॥
गुरूक्तं सूक्ष्ममध्यासभावनानात्वदर्शिनः ॥
आदर्शबिंबितानेकद्वारदर्शिशिशोरिव ॥ ८ ॥
धीसाङ्गशमादिसंपन्नः सद्गुरूक्त्या लभेत्पदम् ॥
चोरैस्त्यक्तो वने बद्धदृगभिज्ञगिरा नरः ॥ ९ ॥
भवाद्भूमेत्यपरोक्षात्मत्वं प्रत्येत्सद्गुरोर्गिरा ॥
भिल्लपालितराट्पुत्र आप्तोक्त्या राजतामिव ॥ १० ॥
कूटस्थसच्चिदानन्दतनोर्धन्यविभो वने ॥
पुत्रस्य जातिवन्ध्याया इव जन्माग्रया यथा ॥ ११ ॥
पाताल्मेणमात्रं चिन्तनी त्रिभं न चापरम् ॥
यस्त्वन्तरं यथा ध्वान्ते रज्जौ सर्पविसर्पणम् ॥ १२ ॥
विषयमहलेच्छा नु स्यात्परिज्ञानतः पुरा ॥
अज्ञस्य शुक्तिविज्ञानात्पूर्वं रजतस्पृहा ॥ १३ ॥
कस्मात्कस्मादिदं जातं येनेन कः सुधीः ॥
को नाम मुक्तिसंपन्न आत्मा घनसदात्मवान् ॥ १४ ॥

स्वस्वरूपस्थितौ सत्यां दुःखं नैव सुखात्मनि ॥
यथा बाल्यादिके त्यक्ते कष्टं स्वात्मनि नैव तत् ॥ २७ ॥
नाध्यात्मिकादिदुःखोऽपि ज्ञात्वेकात्मतां विभुः ॥
स्वसत्यात्मा यथा लोके पटस्थां चित्रितः पटः ॥ २८ ॥
कामं सृजतु कूटस्थे माया विश्वं चिदम्बरे ॥
नास्य लाभो न वा हानिर्वर्षत्यब्दे यथा दिवः ॥ २९ ॥
करणव्यवहारैस्तु कूटस्थात्मा न लिप्यते ॥
न लिप्यते यथा कूटो लोहानामपि ताडनैः ॥ ३० ॥
अन्नमय इवाभातोऽप्यात्मा कोशेभ्य उत्तरः ॥
तेभ्यो विवेचितः शुद्धः स्फटिको रक्ततो यथा ॥ ३१ ॥
शुद्धात्मा व्यवहारेऽपि स्थितस्तेन न लिप्यते ॥
असंगत्वात्तथान्यत्र पद्मपत्रमिवांभसा ॥ ३२ ॥
देहादितापतप्तोऽहमिति धीरविवेकिनः ॥
पुत्रदारेषु तप्येषु तपामीति मतिर्यथा ॥ ३३ ॥
सच्चिदानंदरूपोऽहमेवं निश्चयवानपि ॥
मर्त्योऽस्मीति यदाधीर्हि भ्रममश्नुते क्षणम् ॥ ३४ ॥
निराकृत्य स्वलेखिकां सारमास्थाय नीरसम् ॥
यथा त्यजति निःसारं फले स्वादु रसं पिबन् ॥ ३५ ॥
नात्यन्तासत्यमात्मानं मूढः पश्यति दुष्टदृक् ॥
यथा दिवान्ध उदितमर्कं लोकप्रकाशकम् ॥ ३६ ॥
विमान्यपांशोऽन्यं प्रपञ्चं सुखं यापि विभेत्ति यः ॥
दीपादितो दृश्यमानां स्वच्छायामिव बालकः ॥३७॥
माया दाद्विचिरंनं प्रदर्शयितुं क्षमा ॥
विमर्शं सं यथाऽप्यरतर्कगां मलिनवाद्युयः ॥ ३८ ॥

चिन्तयान्नोऽपि तत्वं स्वं स्वच्छन्दो न नियम्यते ॥
साम्राज्यं स्वतन्त्रं च प्रजाभिरिव राट्सुतः ॥५०॥

परमार्थदृशः क्वापि नेष्टानिष्टे शुभाशुभे ॥
घृष्ट्याऽघृष्ट्याप्पूरस्थसस्यवृद्धिक्षयाविव ॥५१॥

श्रुत्याद्यावृत्तियोगाग्न्युज्ज्वलितः पूर्वरूपभाक् ॥
जीव आत्मैव चागन्तुमलदाहे सुवर्णवत् ॥५२॥

कीटभ्रमरदृष्ट्या न चित्रं स्वध्यानतः स्वता ॥
नामरूपोपाध्यपाये सर्वैक्यं सरिदब्धिवत् ॥५३॥

चित्रप्राप्तिक्षिकैश्वर्यं तत्त्वज्ञं रञ्जयेत्कथम् ॥
हावैः क्षीरेप्सुधृतस्वहृद्दुग्मथयतीह किम् ॥५४॥

ज्ञानी क्षीणान्यकर्मापि प्रारब्धं सहतेऽवशी ॥
व्यालग्राही गृहीताहिर्यथा तत्कृतपीडनम् ॥५५॥

प्राप्तकामं स्थितप्रज्ञं स्वयं कामा विशन्ति तैः ॥
शान्तो नोत्सर्पति यथा पूर्णाब्धिरचलांबुभिः ॥५६॥

या षट्पंचाशिका वासुदेवानन्दीयमुद्गता ॥
वानवासीपुरि तया प्रीयतामत्रिनन्दनः ॥५७॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचिता
षट्पञ्चाशिका संपूर्णा ॥

---

# श्रीदत्तात्रेयस्तोत्राणि

## १०० श्रीदत्तात्रेयाष्टोत्तरशतनामस्तोत्रम् ॥

ॐकारतत्वरूपाय दिव्यज्ञानात्मने नमः ॥
नभोतीतमहाधाम्न ऐंद्र्यृध्या ओजसे नमः ॥ १ ॥

नष्टमत्सरगम्यायागम्याचारात्मवर्त्मने ॥
मोचितामेध्यकृतये ह्रींबीजश्राणितश्रिये ॥ २ ॥

मोहादिविभ्रमांताय बहुकायधराय च ॥
भत्तदुर्वैभवछेत्रे क्लींबीजवरजापिने ॥ ३ ॥

भवहेतुविनाशाय राजच्छोणाधराय च ॥
गतिप्रकंपितांडाय चारुव्यायतबाहवे ॥ ४ ॥

गतगर्वप्रियायास्तु यमादियतचेतसे ॥
वशिताजातवश्याय मुंडिने अनसूयवे ॥ ५ ॥

वदद्वरेण्यवाग्जालाविस्पष्टविविधात्मने ।
तपोधनप्रसन्नायेडापतिस्तुतकीर्तये ॥ ६ ॥

तेजोमण्यंतरंगायाद्मरसद्मविहापिने ॥
आंतरस्थानसंस्थायायैश्वर्यश्रौतगीतये ॥ ७ ॥

वातादिभययुग्भावहेतवे हेतुहेतवे ॥
जगदात्मात्मभूताय विद्विषत्षट्कघातिने ॥ ८ ॥

सुरवर्गोद्धृते भूत्या असुरावासभेदिने ॥
नेत्रे च नयनाक्ष्णे चिच्चेतनाय महात्मने ॥ ९ ॥

देवाधिदेवदेवाय वसुधासुरपालिने ॥
याजिनामग्रगण्याय द्रांबीजजपतुष्टये ॥ १० ॥

चासनावनदावाय धूलियुग्देहमालिने ॥
यतिसंन्यासिगतये दत्तात्रेयेतिसंविदे ॥ ११ ॥
यजनास्यभुजेजाय तारकावासगामिने ॥
महाजवास्पृग्रूपायात्ताकाराय विरूपिणे ॥ १२ ॥
नराय धीप्रदीपाय यशस्वियशसे नमः ॥
हारिणे चोज्वलांगायात्रेस्तनूजाय संभवे ॥ १३ ॥
मोचितामरसंघाय धीमतां धीरकाय च ॥
बलिष्ठविप्रलभ्याय यागहोमप्रियाय च ॥ १४ ॥
भजन्महिमविख्यात्रेऽमरारिमहिमच्छिदे ॥
कामाय कुंडिपूज्याय यमिने हेममालिने ॥ १५ ॥
गतोपाधिव्याधये च हिरण्याहितकांतये ।
यतींद्रचर्यां दधते नरमावौपधाय च ॥ १६ ॥
बरिष्ठयोगिपूज्याय तंतुसंतन्वते नमः ॥
स्थात्मगायासुतीर्थाय मःश्रिये षट्काय च ॥ १७ ॥
तेजोमयोत्तमांगाय नोदनानोद्यकर्मणे ॥
ज्ञान्याभिमुतित्रिहात्र ॐकारितसुभक्तये ॥ १८ ॥
रुक्शुङ्मनःखेदहृते दर्शनाविषयात्मने ॥
रांकवाम्नवस्राय नरतस्त्वप्रकाशिने ॥ १९ ॥
द्राग्वितप्रणतापायात्तःस्वजिष्णु स्वराशये ॥
राजन्त्यास्थैकरूपाय मःस्थायमसुवंधने ॥ २० ॥
यतये चोदनातीतप्रचारप्रभवे नमः ॥
मानरोपविहीनाय शिष्यसंसिद्धिकारिणे ॥ २१ ॥
गंत्रे पादविहीनाय चोदनाचोदितात्मने ॥
यवीयसेऽलर्कदुःखवारिणेऽखंडितात्मने ॥ २२ ॥

प्ह्रींबीजायार्जुनेष्टाय दर्शनादर्शितात्मने ॥
नतिसंतुष्टचित्ताय यतिने ब्रह्मचारिणे ॥ २३ ॥

इत्येष सत्स्तवो वृत्तोयात् कं देयात् प्रजापिने ॥
मस्करीशो मनुस्यूतः परब्रह्मपदप्रदः ॥ २४ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
मन्त्रगर्भश्रीदत्तात्रेयाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

---

## १०१ श्रीदत्तात्रेयप्रार्थनास्तोत्रम् ॥

श्रीपाद श्रीवल्लभ त्वं सदैव। श्रीदत्तास्मान्पाहि देवाधिदेव ॥
भावग्राह्य क्लेशहारिन्सुकीर्ते। घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ १ ॥
त्वं नो माता त्वं पिताऽऽप्तोऽधिपस्त्वम्। त्राता योगक्षेमकृत्सद्गुरुस्त्वम्॥
त्वं सर्वस्वं नोऽप्रभो विश्वमूर्ते। घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ २ ॥
पापं तापं व्याधिमाधिं च दैन्यं। भीतिं क्लेशं त्वं हराशु त्वदन्यम् ॥
त्रातारं नो वीक्ष ईशास्तजूर्ते। घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ ३ ॥
नान्यस्त्राता नापि दाता न भर्ता। त्वत्तो देव त्वं शरण्योऽकहर्ता ॥
कुर्वात्रेयानुग्रहं पूर्णराते। घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ ४ ॥
धर्मे प्रीतिं सन्मतिं देवभक्तिं। सत्संगाप्तिं देहि भुक्तिं च मुक्तिम् ॥
भावासक्तिं चाखिलानंदमूर्ते। घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ ५ ॥
श्लोकपंचकमेतद्यो लोकमंगलवर्धनम् ॥
प्रपठेन्नियतो भक्त्या स श्रीदत्तप्रियो भवेत् ॥ ६ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीदत्तात्रेयप्रार्थनास्तोत्रं संपूर्णम् ॥

---

# १०२ श्रीदत्तात्रेयस्तोत्रम्

दयात्रेयं महात्मानं वरदं भक्तवत्सलं ।
प्रपन्नार्तिहरं वंदे स्मर्तृगामी स माऽवतु ॥ १ ॥

दीनबंधुं कृपासिंधुं सर्वकारणकारणं ।
सर्वरक्षाकरं वंदे स्मर्तृगामी स माऽवतु ॥ २ ॥

शरणागतदीनार्तपरित्राणपरायणं ।
नारायणं विभुं वंदे स्मर्तृगामी स माऽवतु ॥ ३ ॥

सर्वानर्थहरं देवं सर्वमंगलमंगलम् ।
सर्वक्लेशहरं वंदे स्मर्तृगामी स माऽवतु ॥ ४ ॥

शोषणं पापपंकस्य दीपनं ज्ञानतेजसः ।
भक्ताभीष्टप्रदं वंदे स्मर्तृगामी स माऽवतु ॥ ५ ॥

सर्वरोगप्रशमनं सर्वपीडानिवारणम् ।
तापप्रशमनं वंदे स्मर्तृगामी स माऽवतु ॥ ६ ॥

ब्रह्मण्यं धर्मतत्त्वज्ञं भक्तकीर्तिविवर्धनम् ।
आपदुद्धरणं वंदे स्मर्तृगामी स माऽवतु ॥ ७ ॥

जन्मसंसारबंधघ्नं स्वरूपानंददायकम् ।
निःश्रेयसप्रदं वंदे स्मर्तृगामी स माऽवतु ॥ ८ ॥

जयलाभयशःकामदातुर्दत्तस्य यः स्तवम् ।
भोगमोक्षप्रदस्येमं प्रपठेत्स कृती भवेत् ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तात्रेयस्तोत्रं संपूर्णम् ॥

मकरंदान्दर्शनतः पुरुषार्थचतुष्टयम् ।
ददाति भगवान् भूमा सच्चिदानंदविग्रहः ॥ ४ ॥
जागर्ति गुप्तरूपेण गोप्ता ध्यानसमाधितः ।
प्रत्यूहं भक्तसुम्नं ददाति समदृष्टितः ॥ ५ ॥
कृष्णा तृष्णाहरा यत्र सुरसा भुवनेश्वरी ॥
यत्र सौख्यदपादुदत्तपादुका तां नमाम्यहम् ॥ ६ ॥
पादुकारूपियतिराण्नरसिंहसरस्वती ।
राजते राजराजर्षिदत्तश्रीपादवल्लभः ॥ ७ ॥
नमामि गुरुमूर्तिं तं तापत्रयहरं हरिम् ।
आनंदमयसाक्षात्कारं नयभक्त्या सुखप्रदम् ॥ ८ ॥
करवीरस्थविबुधमूढपुत्रं विनिंदितम् ।
छिन्नजिह्वं बुधं चक्रे तद्वन्मयि कृपां कुरु ॥ ९ ॥

---

## १०५ श्रीपादश्रीवल्लभस्तोत्रम्

ब्राह्मण्यै यो मंक्षु भिक्षान्नतोभूच्छ्रीदस्तस्या यः कृपार्द्रः सुतोऽभूत् ॥
विस्मृत्यास्मान् किं स गाढं निद्रौ श्रीपादद्रौ तापदाहानिद्रौ ॥१॥
आम्नायार्थं मतजप्रमत्तान्यः कृत्वा स्वांगात् संचचारार्थमान्यः ॥
विस्मृत्यास्मान् किं स गाढं निद्रौ श्रीपादद्रौ तापदाहानिद्रौ ॥ २ ॥
सार्भा मर्तुं योद्यता स्त्रीस्तु तस्या दुःखं हर्तुं त्वं स्वयं तत्सुतः स्याः ॥
विस्मृत्यास्मान् किं स गाढं निद्रौ श्रीपादद्रौ तापदाहानिद्रौ ॥ ३ ॥
राज्यं योऽदाद्दाशु निर्णेजकाय प्रीतो नत्या यः स्वगुप्त्यै नृकायः ॥
विस्मृत्यास्मान् किं स गाढं निद्रौ श्रीपादद्रौ तापदाहानिद्रौ ॥ ४ ॥

प्रेतं विप्रं जीवयित्वाऽऽस्तजूर्ति यश्चक्रे दिक्‌शालिनीं स्वीयकीर्तिं ॥
विस्मृत्यास्मान् किं स गाढं निद्रौ श्रीपादद्रौ नापदाहानिद्रौ ॥५॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीपादश्रीवल्लभस्तोत्रं संपूर्णम्

---

## १०६ श्रीनृसिंहसरस्वतीप्रार्थनाष्टकम् ॥

अब्दकृत्स्नगिरोऽमरोऽभवद्द्विजपत्न्यास्तनयोऽपि योऽभवत् ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ १ ॥
प्रणवं प्रपपाठ जन्मतो विजहाराल्पदशोऽपि सन्मतः ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ २ ॥
मृतविप्रसुतं व्यजीवयच्च स वंध्यामहिषीमदोहयत् ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ ३ ॥
स्वतनुं यतये व्यदर्शयद्द्विजगाधं गुरुशाप्यनाशयत् ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ ४ ॥
प्रददौ हि मृतप्रियस्त्रिया अपि सौभाग्यमसु यश्चमारिकया ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ ५ ॥
स्वसुतेऽभवदश्वत्थदिक्काशुवशाया अपि वंशवृद्धिकृत् ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ ६ ॥
दुरकार्यपि शुष्कशाखतः कुसुमी येन सुखी च कुष्ठतः ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ ७ ॥
अमराख्यपुरे च योगिनीवरदो योऽधिकदोऽस्ति योगिनोः ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ ८ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीनृसिंहसरस्वतीप्रार्थनाष्टकं संपूर्णम्

---

## १०७ श्रीदत्तगुरुपंचकम्

सुनीलमणिभासुराहृतसुरावदाता सुरा-
सुरार्चितदुराशयाविलनरावराशांबरा ॥
वरादरकरा कराक्षगुणधरा धरापादरा-
दरारवपरा परा तनुरिमां स्मराम्यादरात् ॥ १ ॥
सदादृतपदा पदाहृतपदा सदाचारदा
सदानिजहृदास्पदा शुभरदा मुदासंमदा ॥
मदांतकपदा कदापि तव दासदारिद्र्यहा
सदान्यवरदास्तु मेंतर उदारवीरारिहा ॥ २ ॥
जयाजतनयाभया सदुदया दयार्द्राशया
शयात्तविजयाजया तव तनुस्त्वया हृत्स्थया ।।
नयादरदया दयाविशदया वियोगोनया
तयाश्रय न मे हृदोस्तु शुभया भया भातया ॥ ३ ॥
धियाश्रय भज गुरुं यमृषयोपि चेरुर्गुरुः
स्वशांतिविजितागुरुः समभवत्स पृथ्वीगुरुः ॥
अजं भवरुजं हरंतमुषिजं नरा अत्रिजं
भजंतु तमघोघ्नजं सुमनसामसूयात्मजम् ॥ ४ ॥
नमोस्तु गुरवे स्वकल्पतरवेऽत्र सर्वोरवे
रवेरधिरुचे शुचे मलिनभक्तहृत्कारवे ॥
अवेहि तव किंकरं झिगसि धेहि मे शंकरं
करं तव वरं वरं नव पर वृणे शंकरम् ॥ ५ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीदत्तगुरुपंचकं संपूर्णम् ॥

## १०८ श्रीनृसिंहवाडी दत्तपादुकाष्टकम् ( वृत्तगर्भम् )

कृष्णावेणीपञ्चगङ्गायुतिस्थं श्रीपाद श्रीवल्लभ भक्तहृत्स्थम् ॥
दत्तात्रेय पादुकारूपिणं तं वन्दे विद्याशालिनी संगृणन्तम् ॥ १ ॥
उपेन्द्रवज्रायुधपूर्वदेवैः सपूर्वदेवैर्मुनिभिश्च गीतम् ॥
नृसिंहसञ्ज्ञं निगमागमाद्यं गमागमाद्यन्तकरं प्रपद्ये ॥ २ ॥
परिहृतनवजूर्तिं स्वीयकामप्रपूर्तिं ह्यवनिजभजकार्तिं सच्चिदानन्दमूर्तिम् ॥
सदयहृदयवर्ती योगविचक्रवर्ती स जयति यतिराड् दिङ्मालिनी यस्य कीर्तिः ॥ ३ ॥
द्रुतविलम्बितकर्मविचारणा फलसुसिद्धिरतोऽमरभाग्जनः ॥
अनुभवत्यकमेव तदुद्धृतौ हरिरिहाविरभूत्पदरूप्यसौ ॥ ४ ॥
विद्युन्मालातुल्या सम्पत्प्राज्ञम्मन्यातेऽप्यस्या आपत् ॥
तत्ते धार्यं ज्योतिर्नित्यं ध्याने मेऽस्तु ब्रह्मस्सत्यम् ॥ ५ ॥
त्रिद्वारं तव भवनं चतुष्प्रदीपं विघ्नेशामरपतियोगिनीमरुद्भिः ॥
जाह्नव्याद्युतमभितोऽन्नपूर्णया च स्मृत्वा मे भवति मतिः प्रहर्षिणीयम् ॥ ६ ॥
हरति द्विजानां शिवसोपजातिं पुष्णाति कृष्णा च विनष्टतृष्णा ॥
यथाक्प्रवाहाऽनुमताशिवाह्वा या साऽष्टतीर्थाः स्मृतिमेतु सार्था ॥ ७ ॥
कलौ मलौघातकरं नरञ्जपुरे वरे जातमकामकामम् ॥
चराचराद्य भुवनाऽवनार्थं क्षणे क्षणे सज्जनतानताङ्घ्रिम् ॥ ८ ॥
भुजगप्रयाताद्गुणोत्यादिवास्माद्भवाब्धौ त आगत्य न त्यक्तुमिच्छेत् ॥
नृसिंहस्य वाट्या प्रभो राजधान्या स यायात्सुधन्या गतिं लोकमान्याम् ॥ ९ ॥

इति श्री प प श्रीवासुदेवानन्दसरस्वतीविरचितं
दत्तपादुकाष्टकं संपूर्णम् ॥

---

## १०९ श्रीदत्तात्रेयस्तोत्रम्

दत्तात्रेय त्वां नमामि प्रसीद त्वं सर्वात्मा सर्वकर्ता न वेद ।
कोऽप्यन्तं ते सर्वदेवाधिदेव ज्ञाताज्ञातान्मेऽपराधान्क्षमस्व ॥ १ ॥
त्वदुद्भवत्वात्त्वदधीनधीत्वात्त्वमेव मे वन्द्य उपास्य आत्मन् ।
अथापि मौढ्यात्स्मरणं न ते मे कृतं क्षमस्व प्रियकृन्महात्मन् ॥२॥
भोगापवर्गप्रदमार्तबन्धुं कारुण्यसिन्धुं परिहाय बन्धुम् ।
हिताय चान्यं परिमार्गयन्ति हा मादृशो नष्टदृशो विमूढाः ॥ ३ ॥
न मत्समो यद्यपि पापकर्ता न त्वत्समोऽथापि हि पापहर्ता ।
न मत्समोऽन्यो दयनीय आर्य न त्वत्समः क्वापि दयालुवर्यः ॥४॥
अनाथनाथोऽसि सुदीनबन्धो श्रीशानुकम्पामृतपूर्णसिन्धो ।
त्वत्पादभक्तिं तव दासदास्यं त्वदीयमन्त्रार्थदृढैकनिष्ठाम् ॥ ५ ॥
गुरुस्मृतिं निर्मलबुद्धिमाधिव्याधिक्षयं मे विजयं च देहि ।
इष्टार्थसिद्धिं वरलोकवश्यं धनान्नवृद्धिं हयगोसमृद्धिम् ॥ ६ ॥
पुत्रादिलब्धिं म उदारतां च देहीश मे चास्त्वभयं हि शान्तिः ।
ब्रह्माग्निभूभ्यो नम ओषधीभ्यो वाचे नमो वाक्पतये च विष्णवे ॥७॥
शं वास्तु भूतं शिवमन्तरिक्षं द्यावाभयं मेऽस्तु दिशः शिवाश्च ।
आपश्च विद्युत्परिपान्तु देवाः शं सर्वतो मेऽभयमस्तु शान्तिः ॥८॥

इति श्री प. प. वासुदेवानन्दसरस्वतीविरचितं
दत्तात्रेयस्तोत्रम् ॥

---

## ११० अद्वैतमालामन्त्रः

वराभयकरं देवं सच्चिदानंदविग्रहं ।
दत्तात्रेयं गुरुं ध्यात्वा मालामंत्रं पठेच्छुचिः ॥ १ ॥

ॐ नमो भगवते दत्तात्रेयाय सच्चिदानंदविग्रहायाद्वयत्वादिगुणकाय नित्यशुद्धबुद्धमुक्तस्वभावायासंगतायेक्षामात्रेण प्रकृतिप्रवर्तकायाजायाव्यक्तात्मने भूतेश्वराय सद्धर्मत्राणार्थं योगमाययाविष्कृतशुद्धसत्त्वस्वरूपायाच्युत भवबंधं विमोचय विमोचयाऽपापविद्धासक्तत्वयाश्रमोचितकर्माणि साधय साधय श्रीमन् साधनसंपदं देहि देहि सद्गुरूत्तम गुरूपसत्त्या श्रवणाद्यभ्यासपूर्वकं भवत्पदभक्तिं वितर वितराऽऽद्य लयविक्षेपादीन्परिहर परिहर श्रीहरेऽसंभावनादिडाकिनीर्जहि जहि क्लेशकर्मविपाकाशयवर्जिताविद्यादिक्लेशान्नाशय नाशय हृषीकेशार्थदोषदृष्ट्या प्रमाथींद्रियाणि वशीकुरु वशीकुरु सर्वांतर्यामिन् वैराग्याभ्यासवशाच्चंचलं मन आकर्षयाकर्षयासंग रागद्वेषौ विद्वेषय विद्वेषयाऽऽप्तकाम कामादिशत्रूनुच्चाटयोच्चाटय कल्पनातीत दुष्कल्पनाः स्तंभय स्तंभयाऽसुरनिषूदनासुरभावं मारय मारयाऽस्तसुदर्शन व्याधिस्त्यानादियोगोपसर्गाञ्छमय शमय मृत्युंजय प्रमादमृत्युं विद्रावय विद्रावय विमुक्त हृदयग्रंथिं भिंधि भिंधि निःसंशय सर्वसंशयांश्छिंधि छिंधि निर्वासन दुर्वासना वारय वारय क्रियाकारकफलासंस्पृष्ट ज्ञानाग्निना दाह्यकर्माणि दह दह पाशविमोचन पाशांस्त्रोटय त्रोटयाऽऽदित्यवर्णात्मस्वरूपप्रदर्शनेन स्वपदेन नियोजय नियोजय जय जय भगवन्ननसूयानंदवर्धनाय दत्तात्रेयाय नमस्ते नमस्ते ५००॥

इति पंचशतार्णं यो दध्यान्मालामनुं गले ।
अर्थं तस्य न मुष्णंति देहस्थेंद्रियतस्कराः ॥ २ ॥

दंभदर्पादयो घोरा ये चाविद्यानिशाचराः ।
ये योगभूचरा ज्ञानभूचराः खेचरा अपि ॥ ३ ॥
अंतरायकरा भूतग्रहाः क्रूरतरा अपि ।
याश्च तृष्णादिराक्षस्यो दुर्भरा भैरवा अपि ॥ ४ ॥
ये च त्रिविधदुःखाख्या वेतालो लोभसंज्ञितः ।
महामोहाभिधो महराक्षसो द्विविधावृती ॥ ५ ॥
शाकिनी डाकिनी चापि लयाद्याश्च पिशाचकाः ।
दूरादेव पलायंते तेपि मालास्मृतो द्रुतम् ॥ ६ ॥
धीशुद्धिक्रमतो लभ्या परभक्तिः प्रजापिनः ।
दत्तोऽतो परमं दद्यात्पदं देवसुदुर्लभम् ॥ ७ ॥

इति श्रीवासुदेवानन्दसरस्वतीविरचिता-
द्वैतमालामन्त्रः ॥

---

## १११ अद्वैतं दत्तात्रेयवर्मस्तोत्रम्

ध्यात्वा भक्तामयकरं समष्टिव्यष्टिचालकम् ॥
दत्तात्रेयं पठेद्वर्म सर्वरक्षाकरं परं ॥ १ ॥
स्वसत्तनुप्रणामे मे प्रथमस्य शिरोऽवतु ॥
व्यर्थाचिरः पुरःकंपाद् दुर्भराच्च शुभूर्वकः ॥ २ ॥
स्वपादतुलसीगंधप्रीतिदानेन पातु मे ॥
नासत्यनासिको घ्राणमितरघ्राणतर्पणात् ॥ ३ ॥
नेत्रे स्वसाधुमूर्तिर्मे भास्कराक्षः प्रदर्श्य च ॥
रूपलावण्यसौंदर्यवीक्षणात्परिरक्षतु ॥ ४ ॥
सुश्लोको दिक्श्रुतिः श्रोत्रे श्रावयित्वा स्वकं यशः ॥
श्राव्यं च द्विविधं पातु शब्दात्कर्णकषायदात् ॥ ५ ॥

उच्चारयित्वा मधुरान्स्वगुणान्लोकशोकहान् ॥
जिह्वां पावकत्वात्पातु रसास्वाददुरुक्तितः ॥ ६ ॥
स्वाश्रयक्षेत्रतीर्थेषु गमयित्वा पदौ मम ॥
उरुक्रमपदः पातु व्यर्थपर्यटनादकान् ॥ ७ ॥
रजोहरः स्वसत्पादरजस्तीर्थाप्लुतानि मे ॥
कृत्स्नांगानि हरिः पातु दुःस्पर्शालेपनादितः ॥ ८ ॥
चंद्रचेताः स्वमननाल्हाददानेन मे मनः ॥
दुःखदानंतवस्तुस्पर्शसंकल्पायासतोऽवतु ॥ ९ ॥
चित्तं साक्ष्यनुसंधानं कारयित्वा पुमीश्वरः ॥
मरीचिकोपमद्वैतानुसंधानात्सदावतु ॥ १० ॥
ग्राहयित्वातींद्रियकं बुद्धिं मे निश्चयात्मिकाम् ॥
दुस्तर्कात्पातु जीवात्मा धीव्याप्यस्ततमाः स्वभूः ॥ ११ ॥
दृशे देहेंद्रियप्राणमनोधीभ्यो विलक्षणः ॥
सोहमित्यनुभाव्याहंकारात्पातु दुरात्महात् ॥ १२ ॥
सर्वाशाभ्यः सदा माव्याद्विष्णुः सर्वात्मकोऽपि च ॥
वर्जितं कवचेनाव्याद्रक्षाहीनं च यत्स्थलं ॥ १३ ॥
यो नह्यादात्मनीदं सन्सनद्धः कवची भवेत् ॥
साम्राज्यसंस्थः कामादीन् जित्वाद्वैतसंविदि ॥ १४ ॥
संसारदुःखप्रहरं नष्टात्मधनदायकं ॥
त्रिदोषोत्पातशमनं दुःस्वप्नाद्यादिवारणम् ॥ १५ ॥
यस्यांगे वर्म कंठे च माला गीतायुधं करे ॥
जराप्रदर्शितपथं प्रचंडामयसैनिकम् ॥ १६ ॥
प्राप्तं मृत्युरिपुं चाप्यविगणय्य स एव हि ॥
पदाक्रम्य सुखी यायात्प्रसिद्धं ब्रह्मलोककम् ॥ १७ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचित
श्रीदत्तात्रेयवर्माख्यकवच संपूर्णम् ॥

## ११२ श्रीदत्तप्रार्थनातारावली

दत्तात्रेय महामाय वेदगेय हृतामय ॥
अनसूयाऽत्रितनय ममापायं निवारय ॥ १ ॥

नमो नमस्ते जगदेकनाथ । नमो नमस्ते सुपवित्रगाथ ॥
नमो नमस्ते जगतामधीश । नमो नमस्तेऽस्तु परावरेश ॥ २ ॥

त्वत्तोऽखिलं जातमिदं हि विश्वं । त्वमेव सर्वं परिपासि विश्वं ॥
त्वं शक्तितो धारयसीह विश्वं । त्वमेव भो संहरसीश विश्वम् ॥३॥

त्वं जीवरूपेण हि सर्वविश्वं । प्रविश्य संचेष्टयसे न विश्वं ॥
स्वतंत्रमत्राखिललोकबंधो । कारुण्यसिंधो परबोधसिंधो ॥ ४ ॥

यो ब्रह्मरूपेण सृजत्यशेषं । यो विष्णुरूपेण च पात्यशेषं ॥
यो रुद्ररूपेण च हंत्यशेषं । दुर्गादिरूपैः शमयत्यशेषं ॥ ५ ॥

यो देवतारूपधरोऽपि मार्गं । यो वेदरूपोऽपि बिभर्ति मार्गं ॥
यो ऽधीशरूपेण ददाति भोगं । यो मौनिरूपेण तनोति योगम् ॥६॥

गायंति यं नित्यमशेषवेदाः । यजंति नित्यं मुनयोऽस्तभेदाः ॥
ब्रह्मादिदेवा अपि यं नमंति । सर्वेऽपि ते लब्धहिता भवंति ॥७॥

यो धर्मसेतून्स्फुटदान्बिभर्ति । नैकावतारान्समये बिभर्ति ॥
हत्वाखलान्योऽपि सतो बिभर्ति । यो भक्तकार्यं स्वयमातनोति ॥८॥

स त्वं नूनं देवदेवर्षिगेयो । दत्तात्रेयो भावगम्योऽप्रमेयः ॥
ध्येयः सर्वैर्योगिभिः सर्वमान्यःकोऽन्यस्त्राता तारकोऽधीश धन्यः ॥९॥

सजलजलदनीलो योऽनसूयात्रिबालो
विनिहतनिजकालो योऽमलो दिव्यलीलः ॥
अमरविपुलकीर्तिः सच्चिदानंदमूर्ति-
र्हतनिजभजकार्तिः पात्वसौ दिव्यमूर्तिः ॥ १० ॥

करोति सर्वस्य भवानपेक्षां कथं भवत्तोऽस्य भवेदुपेक्षा ॥
अथापि मूढः प्रकरोति तुच्छां सेवां तवोऽज्ञस्य न जीवितेच्छाम् ॥१९॥

द्वेष्यः प्रियो वा न च तेऽस्ति कश्चित् त्वं वर्तसे सर्वसमोऽथ दुश्चित् ।
त्वामन्यथा भावयति स्वदोषान्निर्दोषतायां तव वेदघोषः ॥ २० ॥

गृण्हासि नो कस्यचिदीश पुण्यं गृण्हासि नो कस्यचिदप्यपुण्यम् ॥
क्रियाफलं मास्य च कर्तृभावं सृजस्यविद्येति न च स्वभावम् ॥२१॥

मातुः शिशोर्दुर्गुणनाशनाय न ताडने निर्दयता न दोषः ॥
तथा नियंतुर्गुणदोषयोस्ते न दुष्टहत्याऽदयता न दोषः ॥ २२ ॥

दुर्गादिरूपैर्महिषासुराद्यान् रामादिरूपैरपि रावणाद्यान् ॥
अनेकहिंसादिकपापयुक्तान् क्रूरान्सदाचारकथावियुक्तान् ॥ २३ ॥

स्वपापनाशार्थमनेककल्पान्यातयंत एवाग्नियानकल्पान् ॥
स्वकीयमुक्तौ निजशस्त्रकृत्तान्कृत्वा भवान्धामनयत्सुपूतान् ॥ २४ ॥

याऽपाययत्स्तन्यमिषाद्विषं सा लेभे गतिं मातृधियां दयालुः ॥
स्वलोपदः को निजकार्यसक्तस्त्वमेव नित्यं ह्यभिमानमुक्तः ॥ २५ ॥

नो कार्यं करणं च ते परगते लिंगं कला नापि ते
विज्ञाता त्वदृमेव नान्य इति वै तत्त्वं प्रसिद्धं श्रुतेः॥
नेशस्ते अनिताधिकः सम उतान्यः कश्चनास्ति प्रभु-
र्दत्तात्रेय गुरो निजाभरतरो त्वं सत्यमेको विभुः ॥२६॥

भोगार्थं सृजसीति कोऽपि वदति क्रीडार्थमित्यं परे
ते केऽन्वाप्तित समाप्तकाम महिमानं नो विदुर्हीतरे ॥
कोपीदं सदसद्वदंत्वितरथा वापास्तु मेतत्कथा-
पंथा मे श्रुतिदर्शितस्तव पदप्राप्त्यै सुखेऽन्ये वृथा ॥ २७ ॥

सोऽनन्यभक्तोऽस्य तु पर्युपासको नित्याभियुक्तो यमुपैत्यभेदतः ॥
तत्प्रीतयेऽसौ भवतात्समर्पनातारावली तत्पदभक्तिभावना ॥२८॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचिता
प्रार्थनातारावली संपूर्णा ॥

## ११३ नक्षत्रमालिकास्तोत्रम्

गोदावर्या महानद्या उत्तरे सिंहपर्वते ॥
सुपुण्ये माहुरपुरे सर्वतीर्थसमन्विते ॥ १ ॥
जज्ञेऽत्रेरनसूयायां प्रदोषे बुधवासरे ॥
मार्गशीर्ष्यां महायोगी दत्तात्रेयो दिगंबरः ॥ २ ॥
मालां कुंडीं च डमरुं शूलं शंखं सुदर्शनम् ॥
दधानः षड्भुजैरत्र्यात्मा योगमार्गप्रवर्तकः ॥ ३ ॥
भस्मोद्धूलितसर्वांगो जटाजूटविराजितः ॥
रुद्राक्षभूषिततनुः शांभवीमुद्रया युतः ॥ ४ ॥
भक्तानुग्रहकृन्नित्यं पापतापार्तिभंजनः ॥
बालोन्मत्तपिशाचाभः स्मर्तृगामी दयानिधिः ॥ ५ ॥
यस्यास्ति माहुरे निद्रा निवासः सिंहपर्वते ॥
प्रातःस्नानं च गंगायां ध्यानं गंधर्वपत्तने ॥ ६ ॥
कुरुक्षेत्रे चाचमनं धूतपापेश्वरे तथा ॥
विभूतिधारणं प्रातःसंध्या च करहाटके ॥ ७ ॥
कोल्हापुरेऽस्य भिक्षा च पांचालेऽपि च भोजनं ॥
तिलको विठ्ठलपुरे तुंगापानं दिने दिने ॥ ८ ॥

पुराणश्रवणं यस्य नरनारायणाश्रमे ॥
विश्रामो रैवते सायंसंध्या पश्चिमसागरे ॥ ९ ॥
कार्तवीर्यार्जुनायाद्यायोगर्धिमुभयीं प्रभुः ॥
स्वात्मतत्त्वं च यदवे बहुगुर्वाप्तमुत्तमम् ॥ १० ॥
आन्वीक्षिकीमलर्काय प्रल्हादाय च धीमते ॥
आयूराजाय च वराम्साध्येभ्यो मोक्षसाधनम् ॥ ११ ॥
मंत्रांश्च विष्णुदत्ताय सोमदत्ताय कर्म च ॥
स एवाविरभूद्भूयः पूर्वार्णवसमीपतः ॥ १२ ॥
भाद्रे मासि सिते पक्षे चतुर्थ्यां राजविप्रतः ॥
सुमत्यां प्राक्सिंधुतीरे रम्ये पीठापुरे वरे ॥ १३ ॥
य आचारव्यवहृतिप्रायश्चित्तोपदेशकृत् ॥
निजाप्रजावंधपंगू विलोक्य प्रव्रजन्सुधीः ॥ १४ ॥
मातापित्रोर्मुदे दृष्टिं गतिं ताभ्यामुपानयत् ॥
मही प्रदक्षिणीकृत्य गोकर्णे व्यद्रुमावसन् ॥ १५ ॥
ततः कृष्णातटं प्राप्य भर्तृकामां सपुत्रकां ॥
निवार्य ब्राह्मणीं मंदप्रदोषव्रतमादिशन् ॥ १६ ॥
तत्पुत्रं विबुधं कृत्वा तस्या जन्मांतरे प्रभुः ॥
पुत्रोभूद्यो नरहरिनामको देश वत्सरे ॥ १७ ॥
करंजनगरेऽप्यंबामाधवद्विजतो विभुः ॥
मासि पौषे सिते पक्षे द्वितीयायां शनैर्दिने ॥ १८ ॥
जातमात्रोऽपि चोंकारं पपाठायापि मूकवत् ॥
सप्ताब्दान्लीलया स्थित्वा नानाकौतुककृत्प्रभुः ॥ १९ ॥
उपनीतोऽपठद्वेदान्सप्तमे वत्सरे स्वयम् ॥
आश्वास्य जननीं पुत्रद्वयदानेन बोधदः ॥ २० ॥

काशीं ग वाष्टांगयोगाभ्यासी कृष्णसरस्वतीम् ॥
कृत्वा गुरु यतिर्भूत्वा वेदार्थान्सम्प्रकाश्य च ॥ २१ ॥
लुप्तसन्यासिधर्मं च तेने तुर्याश्रमोत्तकृन् ॥
मेरु प्रदक्षिणीकृत्य शिष्यान्कृत्वापि भूरिश ॥ २२ ॥
पितृभ्या दर्शन दत्वा द्विज शूलरुजार्दितम् ॥
कृत्वानामयमाश्वास्य सायदेव महामतिम् ॥ २३ ॥
अब्द स्थित्वा वचनाथक्षेत्रे कृष्णातटे तत ॥
भिल्लवाम्या चतुर्मासान्विभुर्गत्वा ततोऽमत ॥ २४ ॥
नृसिंहवाटिकाक्षेत्रे द्वादशाब्दान्वसन्सुधी ॥
तत्र स्थित्वापि गधर्वपुरमेयावसन्मठे ॥ २५ ॥
जीवयित्वा मृतान्दुग्धा वध्या च महिषीं हरि ॥
विश्वरूप दर्शयित्वा यतये विश्वनाटक ॥ २६ ॥
बह्वीरमानुषीर्लीला कृत्वा गुप्तोऽपि तत्र च ॥
य आस्ते भगवान्दत्त सोऽस्मान्रक्षतु सर्वदा ॥ २७ ॥
या सप्तविंशतिश्लोकैः कृता नक्षत्रमालिका ॥
सद्भक्तेभ्योर्पिता भक्ताभिन्नश्रीदत्ततुष्टये ॥ २८ ॥
द्वादश्यामाश्विने कृष्णे श्रीपादस्योत्सवो महान् ॥
माघे कृष्णे प्रतिपदि नरसिंहप्रभोस्तथा ॥ २९ ॥

इति श्री. प. प श्र वासुदेवानदसरस्वतीविरचिता
नक्षत्रमालिका सपूर्णा ॥

---

## ११४ श्रीदत्तभावसुधारसस्तोत्रम्

दत्तात्रेय परसुखमय वेदगेय ह्यमेय
योगिध्येय हृतनिजभय स्वीकृतानेककायम् ।
दुष्टागम्य विततविजय देवदैत्यर्षिवंद्य
वंदे नित्यं विहितविनय चाव्ययं भावगम्यम् ॥ १ ॥

दत्तात्रेय नमोऽस्तु ते भगवते पापक्षयं कुर्वते
दारिद्र्यं हरते भयं शमयते कारुण्यमातन्वते ।
भक्तानुद्धरते शिवं च ददते सत्कीर्तिमातन्वते ।
भूतान्द्रावयते वरं प्रददते श्रेयः पते सद्गते ॥ २ ॥

एकं सौभाग्यजनकं तारकं लोकनायकम् ।
विशोकं भक्तभजकं नमस्ये कामपूरकम् ॥ ३ ॥

नित्यं स्मरामि ते पादे हतखेदे सुखप्रदे ।
प्रदेहि मे शुद्धभावं भावं यो वारयेद्द्रुतम् ॥ ४ ॥

समस्तसम्पत्प्रदमार्तबंधुं समस्तकल्याणदमस्तबंधुम् ।
कारुण्यसिंधुं प्रणमामि दत्तं यः शोधयत्याशु मलीनचित्तम् ॥५॥

समस्तभूतान्तरबाह्यवर्ती यश्चात्रिपुत्रो यतिचक्रवर्ती ।
सुकीर्तिसंव्याप्तदिगन्तरालः स पातु मां निर्जितभक्तकालः ॥६॥

व्याध्याधिदारिद्र्यभयार्तिहर्ता स्वभक्तयेऽनेकशरीरधर्ता ।
स्वदासभर्ता प्रभुणा विहर्ता कर्ताप्यकर्ता स्वयशोऽरिहर्ता ॥७॥

सोऽनसूयातनयोऽभवद्यो विष्णुः स्वयं भक्तिरक्षणाय ।
गुणा यदीया न हि बुद्धिमद्भिर्गण्यन्त आकल्पमपीह धात्रा ॥ ८ ॥

न यत्कटाक्षामृतवृष्टितोऽत्र तिष्ठन्ति तापाः सकलाः परत्र ।
यः सद्गतिं सन्ददाति भूमा स मेऽन्तरे तिष्ठतु दिव्यधामा ॥ ९ ॥

स त्वं प्रसीदात्रिसुतार्तिहारिन् दिगंबर स्वीयमनोविहारिन् ॥
दुष्टा लिपिर्या लिखितात्र धात्रा कार्या त्वया साऽतिशुभा विधात्रा ॥१०॥

सर्वमंगलसंयुक्त सर्वैश्वर्यसमन्वित ॥
प्रसन्ने त्वयि सर्वेशे किं केषां दुर्लभं कुह ॥ ११ ॥

हार्दांधतिमिरं हंतुं शुद्धज्ञानप्रकाशक ॥
त्वदंघ्रिनखमाणिक्यद्युतिरेवालमीश नः ॥ १२ ॥

स्वकृपार्द्रकटाक्षेण वीक्षसे चेत्सकृद्धि मां ॥
भविष्यामि कृतार्थोऽत्र पात्रं चापि स्थितेस्तव ॥ १३ ॥

क्व च मंदो वराकोऽहं क्व भवान्भगवान्प्रभुः ॥
अथापि भवदादेशाद्भाग्यवानस्मि वै दृशा ॥ १४ ॥

विहितानि मया नाना पातकानि च यद्यपि ॥
अथापि ते प्रसादेन पवित्रोऽहं न संशयः ॥ १५ ॥

स्वलीलया त्वं हि जनान्पुनासि तस्मै स्वलीलाश्रवणं प्रयच्छ ॥
तस्याः श्रुतेः मांद्रविलोचनोऽहं पुनामि चात्मानमदीय देव ॥१६॥

पुरतस्ते स्फुटं वच्मि दोषराशिरहं किल ।
दोषा ममामिताः पांसुवृष्टिबिंदुसमा विभो ॥ १७ ॥

पापीयसामहं मुख्यः त्वं तु कारुणिकाग्रणीः ।
दयनीयो नहि क्वापि मदन्य इति भाति मे ॥ १८ ॥

ईदृशं मां विलोक्यापि कृपालो ते मनो यदि ।
न द्रवेत्तर्हि किं वाच्यमदृष्टं मे तवाग्रतः ॥ १९ ॥

त्वमेव सृष्टवान्सर्वान्दत्तात्रेय दयानिधे ॥
वयं दीनतराः पुत्रास्तवाकल्पाः स्वरक्षणे ॥ २० ॥

जयतु जयतु दत्तो देवसंघाभिपूज्यो
जयतु जयतु भद्रो भद्रदो भावुकेज्यः ॥
जयतु जयतु नित्यो निर्मलज्ञानवेद्यो
जयतु जयतु सत्यः सत्यसंधोऽनवद्यः ॥ २१ ॥

यद्यहं तव पुत्रः स्यां पिता माता त्वमेव मे ॥
दयास्तन्यामृतेनाशु मातस्त्वमभिषिंच माम् ॥ २२ ॥

ईशाभिन्ननिमित्तोपादानत्वात्सद्गुरुस्त्वं वै ॥
अनघोने सुतो नाहं दत्त मां परिपाह्यतः ॥ २३ ॥

तव वत्सस्य मे वाक्यं सूक्तं वाऽसूक्तमप्यहो ॥
क्षंतव्यं मेऽपराधश्च त्वत्तोऽन्या न गतिर्हि मे ॥ २४ ॥

अनन्यगतिकस्यास्य बालस्य मम वै पितः ॥
न सर्वथोचितोपेक्षा दोषाणां गणनापि च ॥ २५ ॥

अज्ञानित्वाद्दुष्पथाद्दोषा मम पदे पदे ॥
भवंति किं करोमीश करुणावरुणालय ॥ २६ ॥

अथापि मेऽपराधैश्चेदायास्यंतर्विपातय म् ॥
पदाहतार्भकेणापि माता रुष्यति किं भुवि ॥ २७ ॥

अंकमंकगतं दीनं ताडयंतं पदेन च ॥
माता त्यजति किं बालं प्रत्युताश्वासयत्यहो ॥ २८ ॥

तादृशं मामकर्तं चेन्नाश्वासयसि भो प्रभो ॥
अहहा बत दीनस्य त्वां विना मम का गतिः ॥ २९ ॥

शिशुर्नायं शठः स्वार्थी यापि नायातु तेऽन्तरम् ॥
लोके हि क्षुधिता बालाः स्मरंति निजमातरम् ॥ ३० ॥

जीवनं भिन्नयोः पित्रोर्लोके एकतराच्छिशोः ॥
त्वं तूभयं दत्त मम मास्तु निर्दयता मयि ॥ ३१ ॥
स्तवनेन न शक्तोऽस्मि त्वां प्रसादयितुं प्रभो ॥
ब्रह्माद्याश्चकितास्तत्र मंदोऽहं शक्नुयां कथम् ॥ ३२ ॥
दत्त त्वद्बालवाक्यानि सूक्तासूक्तानि यानि च ॥
तानि स्वीकुरु सर्वज्ञ दयालो भक्तभावन ॥ ३३ ॥
ये त्वां शरणमापन्नाः कृतार्था अभवन्निह ते ॥
एतद्विचार्य मनसा दत्त त्वां शरणं गतः ॥ ३४ ॥
त्वन्निष्ठास्त्वत्परा भक्तास्तव ते सुखभागिनः ॥
इति शास्त्रानुरोधेन दत्त त्वां शरणं गतः ॥ ३५ ॥
स्वभक्काननुगृह्णाति भगवान्भक्तवत्सलः ॥
इति संचिंत्य संचिंत्य कथंचिद्धारयाम्यसून् ॥ ३६ ॥
त्वद्भक्तस्त्वदधीनोऽहमस्मि तुभ्यं समर्पितम् ॥
तनुं मनो धनं चापि कृपां कुरु ममोपरि ॥ ३७ ॥
त्वयि भक्तिं नैव जाने न जानेऽर्चनपद्धतिम् ॥
कृतं न दानधर्मादि प्रसादं कुरु केवलम् ॥ ३८ ॥
ब्रह्मचर्यादि नाचीर्णं नाधीता विधितः श्रुतिः ॥
गार्हस्थ्यं विधिना दत्त न कृतं तत्प्रसीद मे ॥ ३९ ॥
न साधुसंगमो मेऽस्ति न कृतं वृद्धसेवनं ॥
न शास्त्रशासनं दत्त केवलं त्वं दयां कुरु ॥ ४० ॥
ज्ञातेऽपि धर्मे नाहि मे प्रवृत्तिर्ज्ञातेऽप्यधर्मे न ततो निवृत्तिः ॥
श्रीदत्तनाथेन हृदि स्थितेन त्वया नियुक्तोऽस्मि तथा करोमि ॥ ४१ ॥
कृतिः सेवा गतिर्यात्रा स्मृतिश्चिंता स्तुतिर्वचः ॥
भवंतु दत्त मे नित्यं त्वदीया एव सर्वथा ॥ ४२ ॥

प्रतिज्ञा ते न भक्ता मे नश्यंतीति सुनिश्चितम् ॥
श्रीदत्त चित्त आनीय जीवनं धारयाम्यहं ॥ ४३ ॥
दत्तोऽहं ते मयेतीश आत्मदानेन योऽभवत् ॥
अनसूयात्रिपुत्रः स श्रीदत्तः शरणं मम ॥ ४४ ॥
कार्तवीर्यार्जुनायादाद्योगर्द्धिमुभयीं प्रभुः ॥
अव्याहतगतिं चासौ श्रीदत्तः शरणं मम ॥ ४५ ॥
आन्वीक्षिकीमलर्काय विकल्पत्यागपूर्वकम् ॥
यो ददावार्यवर्यः स श्रीदत्तः शरणं मम ॥ ४६ ॥
चतुर्विंशतिगुर्वाप्तं हेयोपादेयलक्षणं ॥
ज्ञानं यो यदवेऽदात्स श्रीदत्तः शरणं मम ॥ ४७ ॥
मदालसागर्भरत्नालर्काय प्राहिणोच्च यः ॥
योगपूर्वात्मविज्ञानं श्रीदत्तः शरणं मम ॥ ४८ ॥
आयुराजाय सत्पुत्रं सेवाधर्मपराय यः ॥
प्रददौ सद्गतिं चैव श्रीदत्तः शरणं मम ॥ ४९ ॥
लोकोपकृतये विष्णुदत्तविप्राय योऽर्पयत् ॥
विद्यास्तच्छ्राद्धभुग्यः स श्रीदत्तः शरणं मम ॥ ५० ॥
भर्त्रा सहानुगमनविधिं यः प्राह सर्ववित् ॥
राममात्रे रेणुकायै श्रीदत्तः शरणं मम ॥ ५१ ॥
समूलशान्दिकं कर्म सोमकीर्तिनृपाय यः ॥
मोक्षोपयोगि सकलं श्रीदत्तः शरणं मम ॥ ५२ ॥
नामधारकभक्ताय निर्विण्णाय व्यदर्शयत् ॥
तुष्टः स्तुत्या स्वरूपं स श्रीदत्तः शरणं मम ॥ ५३ ॥
यः कलिब्रह्मसंवादमिषेणाऽऽह युगस्थितीः ॥
गुरुसेवां च सिद्धाऽऽस्यात्सद्दत्तः शरणं मम ॥ ५४ ॥

शिष्यत्वेनोररीकृत्य सायंदेवं ररक्ष यः ॥
भीतं च क्रूरयवनाच्छ्रीदत्तः शरणं मम ॥ ६७ ॥
प्रेरयत्तीर्थयात्रार्थं तीर्थरूपोऽपि यः स्वकान् ॥
सम्यग्धर्ममुपादिश्य श्रीदत्तः शरणं मम ॥ ६८ ॥
सशिष्यः पर्यलीक्षेत्रे वैद्यनाथसमीपतः ॥
स्थित्वोद्दधार मूढं यः श्रीदत्तः शरणं मम ॥ ६९ ॥
विप्रश्रुतसमधियं य आगतं लोकनिंदितम् ॥
छिन्नजिह्वं बुधं चक्रे श्रीदत्तः शरणं मम ॥ ७० ॥
नृसिंहवाटिकास्थो यः प्रददौ शाकभुङ् निधिम् ॥
दरिद्रब्राह्मणायासौ श्रीदत्तः शरणं मम ॥ ७१ ॥
भक्ताय त्रिस्थलीयात्रां दर्शयामास यः क्षणात् ॥
चकार परं क्षेत्रे श्रीदत्तः शरणं मम ॥ ७२ ॥
प्रेतं तं वारयित्वा यो ब्राह्मण्यै भक्तिभावितः ॥
ददौ पुत्रौ स गतिदः श्रीदत्तः शरणं मम ॥ ७३ ॥
तत्वे यो मृतपुत्रार्थे बोधयित्वाप्यजीवयत् ॥
मृतं कल्पद्रुमस्थः [illegible] श्रीदत्तः शरणं मम ॥७४॥
दोहयामास भिक्षार्थं यो वंध्यां महिषीं प्रभुः ॥
दारिद्र्यदावदावः स श्रीदत्तः शरणं मम ॥ ७५ ॥
राजप्रार्थित एत्यास्थान्मठे यो गाणगापुरे ॥
ब्रह्मरक्षःसमुद्धर्ता श्रीदत्तः शरणं मम ॥ ७६ ॥
विश्वरूपं निदर्श्याय शिविकास्थः स्वलंकृतः ॥
गर्वहृद्दर्शयद्यः स श्रीदत्तः शरणं मम ॥ ७७ ॥
त्रिविक्रमेण चालीतौ गर्वितौ ब्राह्मणद्विषौ ॥
बोधयामास तौ यः स श्रीदत्तः शरणं मम ॥७८॥

स्वकृत्वा चतुर्वेदशाखाध्यावदंगादिकमीश्वरः ॥
विप्रगर्वहरो यः स श्रीदत्तः शरणं मम ॥ ७९ ॥
सप्तजन्मविदं सप्तरेखोल्लंघनतो ददौ ॥
यो हीनाय श्रुतिस्फूर्तिं श्रीदत्तः शरणं मम ॥ ८० ॥
त्रिविक्रमायाह कर्मगतिं दत्त्वाविशः पुनः ॥
विप्रोक्तं पतितं चक्रे श्रीदत्तः शरणं मम ॥ ८१ ॥
रक्षसे वामदेवेन भस्ममाहात्म्यमुद्रितम् ॥
उक्तं त्रिविक्रमायाह श्रीदत्तः शरणं मम ॥ ८२ ॥
गोपीनाथसुतो कृष्णो मृतस्तस्त्री शुशोच ताम् ॥
बोधयामास यो योगी श्रीदत्तः शरणं मम ॥ ८३ ॥
गुर्वगस्त्यविसंवादरूपं स्त्रीधर्ममाह यः ॥
रूपांतरेण स प्राप्तः श्रीदत्तः शरणं मम ॥ ८४ ॥
विधवाधर्ममादिश्यानुगमे चाक्षमस्मदः ॥
अजीवयन्मृतं विप्रं श्रीदत्तः शरणं मम ॥ ८५ ॥
वेश्यासत्यै तु रुद्राक्षमाहात्म्ययुतमीदृशवम् ॥
प्रसादं प्राह यः सत्यै श्रीदत्तः शरणं मम ॥ ८६ ॥
शतरुद्रीयमाहात्म्यं स्मरतात्सुतजीवनम् ॥
सत्यै शशंस स गुरुः श्रीदत्तः शरणं मम ॥ ८७ ॥
कृपाळुत्वानं स्त्रियो मंत्रानर्हंतायसुभाग्यदम् ॥
सोमव्रतं च यः प्राह श्रीदत्तः शरणं मम ॥ ८८ ॥
ब्राह्मण्या दुःस्वभावं यो निवार्याह्निकसुत्तमम् ॥
शशीस ब्राह्मणायासौ श्रीदत्तः शरणं मम ॥ ८९ ॥
गार्हस्थ्यधर्मं विप्राय प्रत्यवायजिहासया ॥
क्रममुक्त्यै च ऊचे स श्रीदत्तः शरणं मम ॥ ९० ॥

त्रिपुंपर्याप्तपाकेन भोजयामास यो नृणाम् ॥
सिद्धश्चतु सहस्राणि श्रीदत्तः शरणं मम ॥ ९१ ॥
अश्वत्थसेवामादिश्य पुत्रौ योदात्फलप्रदः ॥
चित्रकृद् वृद्धवंध्यायै श्रीदत्तः शरणं मम ॥ ९२ ॥
कारयित्वा शुष्ककाष्ठसेवां तद्वृक्षतां नयन् ॥
विप्रकुष्ठं जहारासौ श्रीदत्तः शरणं मम ॥ ९३ ॥
भजंतं कष्टतोऽप्याह सायंदेवं परीक्ष्य यः ॥
गुरुसेवाविधानं स श्रीदत्तः शरणं मम ॥ ९४ ॥
शिवतोषकरीं काशीयात्रां भक्ताय योऽवदत् ॥
सविधिं विहितां त्वष्ट्रा श्रीदत्तः शरणं मम ॥ ९५ ॥
कौंडिण्यधर्मविहितमनंतव्रतमाह यः ॥
कारयामास तद्योऽपि श्रीदत्तः शरणं मम ॥ ९६ ॥
श्रीशैलं तंतुकायासौ योगगत्या व्यदर्शयत् ॥
शिवरात्रिव्रताहे स श्रीदत्तः शरणं मम ॥ ९७ ॥
ज्ञापयित्वाप्यमर्त्यत्वं स्वस्य दृष्ट्या चकार यः ॥
विकुष्ठं नंदिशर्माणं श्रीदत्तः शरणं मम ॥ ९८ ॥
नरकेसरिणे स्वप्ने स्वं कल्लेश्वरलिंगगम् ॥
दर्शयित्वानुजग्राह श्रीदत्तः शरणं मम ॥ ९९ ॥
अष्टमूर्तिधरोऽप्यष्टग्रामगो भक्तवत्सलः ॥
दीपावल्युत्सवेऽमुत्र श्रीदत्तः शरणं मम ॥ १०० ॥
अपक्वं छेदयित्वापि क्षेत्रे शतगुणं ततः ॥
धान्यं शूद्राय योऽदात्स श्रीदत्तः शरणं मम ॥ १०१ ॥
गाणगापुरके क्षेत्रे योऽष्टतीर्थान्यदर्शयत् ॥
भक्तेभ्यो भीमरथ्यां स श्रीदत्तः शरणं मम ॥१०२॥

पूर्वं दत्तवरायाद्राद्याय स्फोटकरुग्धरः ॥
म्लेच्छाय दर्शितं चेष्टं स श्रीदत्तः शरणं मम ॥ १०३ ॥
श्रीशैलयात्रामिषेण वरदः पुष्पपीठगः ॥
कलौ तिरोऽभवद्यः स श्रीदत्तः शरणं मम ॥ १०४ ॥
निद्रा मातृपुरेऽस्य सह्यशिखरे पीठं भिक्षा पुरे
काश्याख्ये करहाटकेऽर्घ्यमवरे भिक्षास्य कोलापुरे ॥
पांचाले भुजिरस्य विठ्ठलपुरे पत्रं विचित्रं पुरे
गांधर्वे युजिराचमः कुरुपुरे दूरे स्मृतो नांतरे ॥ १०५ ॥
अमलकमलवक्त्रः पद्मपत्राभनेत्रः
परविरतिकलत्रः सर्वथा यः स्वतंत्रः ॥
स च परमपवित्रः सत्कमंडलुपात्रः
परमरुचिरगात्रो योऽनसूयात्रिपुत्रः ॥ १०६ ॥
नमस्ते समस्तेष्टदात्रे विधात्रे नमस्ते समस्तेड्यताघौघहर्त्रे ॥
नमस्ते समस्तेङ्गितज्ञाय भर्त्रे नमस्ते समस्तेष्टकर्त्रेऽकहर्त्रे ॥१०७॥
नमो नमस्तेऽस्तु पुरांतकाय नमो नमस्तेऽस्त्वसुरांतकाय ॥
नमो नमस्तेऽस्तु खलांतकाय दत्ताय भक्तार्तिविनाशनाय ॥१०८॥
श्रीदत्तदेवेश्वर मे प्रसीद श्रीदत्तसर्वेश्वर मे प्रसीद ॥
प्रसीद योगेश्वर देहि योगं त्वदीयभक्तेः कुरु मा वियोगम् ॥१०९॥
श्रीदत्तो जयतीह दत्तमनिशं ध्यायामि दत्तेन मे ।
हृच्छुद्धिर्विहिता ततोऽस्तु सततं दत्ताय तुभ्यं नमः ॥
दत्तान्नास्ति परायणं श्रुतिमतं दत्तस्य दासोऽस्म्यहम् ।
श्रीदत्ते परभक्तिरस्तु मम भो दत्त प्रसीदेश्वर ॥ ११० ॥
इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तभावसुधारसस्तोत्रं संपूर्णम् ॥

## ११५ प्रार्थनास्तोत्रम्

प्रभो देवदेव प्रभो दत्तदेव ।
तारकोऽस्माकमकहृत्त्वमेव ॥
प्रभो देव देव प्रभो दत्तदेव ॥ ध्रु ॥
पाहि करुणाकरा पाहि परमेश्वरा ।
त्राहि भवसागरादखिलदेव ॥
पाहि लघु सन्मते पाहि लघु सन्मते ।
देहि लघु सद्गते शुद्धभावम् ॥ १ ॥
त्वमसि दुरितापहा त्वमसि भवतापहा ।
त्वमसि कुमतापहा सर्वदेव ॥
त्वमसि हितकारकस्त्वमसि भयवारकः
स्त्वमसि भवतारक साधुदेव ॥ २ ॥
त्वमसि मम दैवतं त्वमसि मम जीवितं ।
त्वमसि मम सकलहितजातमेतत् ॥
त्वमसि मम चालकस्त्वमसि मम पालक
स्त्वमसि मम तारको दत्तदेव ॥ ३ ॥
आर्द्रनवनीतकोमलं सांद्रकरुणात्मकं ।
सांद्रचिद्विलासोज्ज्वलं सुकृतशीलं ।
हृदयमिह विश्रुतं सदयमज ते मतं
सुनय सत्सा द्रुतं भवतु देव ॥ ४ ॥
देव भवदावतप्तस्तीव्रतरतापतः ।
दत्त संतापितं मामिषिंच ॥
सत्कटाक्षामृतैः पूजितामिऽमृतैः
संस्तुवास्त्वामृतैः पाहि देव

घोरघोराघकापाप्लुते सद्भवेऽगाधसंसारकूपे दुरन्ते ।
पतितमतिमन्युना घोरकालाहिना
सभृत मोचयाशेव माम्‌ ॥ ६ ॥
घोरभवसागरे सर्वथा दुस्तरेऽस्मिन्ननाद्यावनंतेऽनपारे ।
पतितमिह दु खित कर्मवाताहत
प्रोद्धरार्तं प्रभो मां सुभाव ॥ ७ ॥
मत्सम. पापकृन्नत्सम पापहृत् ।
नास्त्यपर ईश्वर प्रार्थये तत्‌ ।
यत्त्वमिच्छसि विभो तत्कुरुष्व प्रभो
वासुदेवार्थित भीश देव ॥ ८ ॥ प्रभो
इति श्री. प. प श्रीवासुदेवानंदसरस्वतीविरचित
श्रीदत्तात्रयप्रार्थनास्तोत्र संपूर्णम्‌ ॥

---

## ११६ आयुराजकृतदत्तात्रेयस्तोत्रं चतुःस्वम्‌ ॥

दुर्दर्शं ईशोऽपि मयाऽविज्ञान मपूजितो येन वरोऽपि दत्त ॥
दयामये तत्पदि मेऽस्ति चित्तं दत्तात्रय त प्रणमामि दत्तम्‌ ॥ १ ॥
भगवन्‌ किमु मामुपेक्षसे मयकन्मान्य सहापि नेक्षसे ॥
चरित किमु दुष्कर मया चरित वाऽऽत्त क्लेश दे मया ॥ २ ॥
प्रणमामि विभो प्रसीद मे प्रणतेऽपीश धृते महात्मने ॥
शरणं भव पेश नश्वरण मेऽभयदं गतिर्हि न ॥ ३ ॥
पुत्रार्थं त्वाराध्य लब्धानि कान्तं
पुत्रार्थं ते सत्प्रसादादकान्तम्‌ ॥
मेनेऽस्तार्तो नष्टपुत्र सुरेश
धीके त्वत्तोऽन्याश्रय नो परेश ॥ ४ ॥
इति श्री प. प श्रीवासुदेवानंदसरस्वती कृत
चतुःस्व आयुराजकृतदत्तात्रयस्तोत्र संपूर्णम्‌ ॥

## ११७ श्रीदत्तात्रेयप्रार्थनास्तोत्रम्

समस्तदोषशोषणं स्वभक्तचित्ततोषणं
निजाश्रितप्रपोषणं यतीश्वराग्र्यभूषणं ॥
श्रुतिशिरोविभूषणं प्रदर्शितार्थदूषणं
भजेऽत्रिजं गतैषणं विभुं विभूतिभूषणम् ॥ १ ॥
समस्तलोककारणं समस्तजीवधारणं
समस्तदुष्टमारणं कुबुद्धिशक्तिजारणम् ॥
भजद्भयादिदारणं भजत्कुकर्मवारणं
हरिं स्वभक्ततारणं नमामि साधुचारणम् ॥ २ ॥
नमाम्यहं सुदास्पदं निशारिशारिखापदं
समस्तदुःखतापदं मुनीन्द्रवंद्य ते पदम् ॥
यदंचितांतरामदं विहाय नित्यसम्मदं
प्रयान्ति नैव ते भिदं मुहुर्भजन्ति चाविदम् ॥ ३ ॥
प्रसीद सर्वचेतने प्रसीद शुद्धचेतने
स्वभक्तहृन्निकेतने सदाम्ब दुःखशातने ॥
त्वमेव मे प्रसूर्मता त्वमेव मे प्रभो पिता
त्वमेव मेऽखिलेहितार्थदोऽखिलाकतोऽविता ॥ ४ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीदत्तप्रार्थनास्तोत्रं संपूर्णम् ॥

---

## ११८ श्रीदत्तप्रतिष्ठास्तोत्रम्

शालिवाहनशकेऽभ्रपूर्णगजक्ष्मामिते तपसि मासि योऽत्रिजः ॥
गौतमीतट उपागतो विभुर्दत्त एष स पुनातु नः प्रभुः ॥ १ ॥

योऽघुवेगवदपत्यनुद्धतान्नाशयत्यपि सुधीरयोद्धतान् ॥
दत्त एष पुनातु नः स्वकान् सेवकांश्च विदधा वशो व्यकान् ॥ २ ॥

गौतम्या निवसति पूर्वकूल आन्ध्रे देशे यो निजभजकेष्टकृन्महीन्द्रे ॥
महाख्ये महति यथा तथानपीय यस्यास्ते जगति कथा प्रहर्षणीयम् ॥३॥

यो माघे मासि राकायां शुक्रवारे प्रतिष्ठितः ॥
ब्रह्मानन्देन गौतम्यां श्रीदत्तो भक्तवत्सलः ॥ ४ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीदत्तप्रतिष्ठास्तोत्रं संपूर्णम् ॥

---

## ११९ श्रीदत्तात्रेयस्तोत्रम् ॥

नमस्तेऽनसूयासुतायार्तिहन्त्रे नमस्तेऽत्रिपुत्राय सर्वाधिहन्त्रे ॥
नमस्तेऽवधूताय लोकैकभर्त्रे नमस्ते समस्तेहितायादिकर्त्रे ॥ १ ॥
नमस्ते मखादिक्रियाकर्मकर्त्रे नमस्ते जगत्साक्षिणे वै त्रिकर्त्रे ॥
नमस्तेऽसुरारातये भक्तत्रात्रे नमस्तेऽखिलस्यास्य पित्रे च मात्रे ॥२॥
नमस्ते जगन्मानसप्रेरकाय नमस्ते जगद्यन्त्रसंचालकाय ॥
नमो योगिवर्य प्रभो मे प्रसीद नमो भिक्षुवन्द्य प्रभो मे प्रसीद ॥३॥
भुजंगप्रयातेऽहितास्मासु माला भुजंगप्रयातोपमं ते विशाला ॥
भवं नाशयित्वा वसत्वीशमूर्तिः शिवंकर्यपीडयाऽऽधिहन्त्री च
कीर्तिः ॥ ४ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीदत्तात्रेयस्तोत्रं संपूर्णम् ॥

## १२० श्रीदत्तात्रेयस्तोत्रम्

जन्माद्यस्य यतो यतो जगदिदं शास्त्रं च शास्त्रप्रमं
यत्तच्छास्त्रसमन्वितं मतिहितं वेद्यं विनष्टभ्रमम् ॥
दत्ताख्यं तदु माययाऽस्य तु मया शार्दूलविक्रीडितम्
प्रारब्धं करुणेश मन्दमतिना स्तोत्रं सदस्त्वीडितम् ॥ १ ॥

ईशात्पूर्वमचिन्त्यशक्तिरजनिद्वेधं य एको विभुः ॥
साङ्ख्याः शापमुखेश्च लोकविपदो व्राग्भारयंस्ताः प्रभुः ॥
पत्न्या अत्रिमुनेस्तपस्विन इतश्चेषामितां निर्मलं ॥
दुर्वास शशिदत्तसंज्ञित इनः कुर्यात्स नो मङ्गलम् ॥ २ ॥

कक्षाद्दीपकशिष्यया त्रिजगुरुं श्रीवेदधर्माह्वयं
रुष्टं कुष्ठमहो निषेव्य वरदं विश्वेशदृग्यांग्वयम् ॥
सोऽसादत्त सुरद्वयं स्वगुरुतो यत्रे यशोऽस्याऽमलम्
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ३ ॥

मन्दादः क्षुधितातिथिद्विजनुषः शप्तोऽसुरत्वं गतः
कृत्वाऽजेन रणं क्षणं हतमतिः सोऽस्तात्मवित्याहृतः ॥
यं भक्त्या शरणं यतोऽलभदिमामान्वीक्षिकीं निश्चलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ४ ॥

यं साध्याभिधदेवता उपगतास्ताभ्यो जगादामृतं
यो दुःसङ्गनिवृत्तिपूर्वकमरं धेयं विविक्तामृतम् ॥
शान्तिं चारि तपोन्तरङ्गकतया मायानियन्ताऽचलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ५ ॥

यं वर्णाश्रमलिङ्गहीनममले नग्नं स्थितं सावलं
नागः पिङ्गल ऊच आश्रममिदं किं ते वदेत्याद सम् ॥
योऽसौ पञ्चममाश्रमं समवदत् पूतस्य मे हीत्यलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ६ ॥

यो बुद्ध्याश्रितभूनगादिगुरुत आदेयहेयात्मकम्
शान्त्यादिप्रदशिक्षणं च यदवे पृष्टो जगौ स्वार्जितम् ॥
आत्मैवात्मगुरुः किलेति च यतो योऽदर्शयन्व्यर्गलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ७ ॥
निद्रां वीक्ष्य पुरा पुरारिरमरीं योगर्द्धिमुख्यैर्ददौ
बाहूनां च सहस्रमाजिमरणं यश्चार्जुनायोद्गतिम् ॥
वन्दे भार्गवरामकामदमरं श्रीरेणुकाभीष्टदं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ८ ॥
रक्षः प्रत्युपकार्यदर्शयदहो त्रिविष्णुदत्ताय यं
दुर्दर्शोऽपि निमन्त्रितोऽग्निरविभुक् श्राद्धान्नभुक् सान्वयम् ॥
तं रक्षोऽप्यनयन्निजं पदमदो मोदात्मकं सोज्ज्वलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ९ ॥
भिक्षित्वाप्रभुपादिशद्वरममूनन्वागतप्राणे
यैः सप्तग्रहमुक्त आस मनुभिर्ब्रह्मात्मजो ब्रह्मणे ॥
तस्मै दुर्ग्रहनिग्रहाय महसे कुर्मो नमो मङ्गलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ १० ॥
आयूराजवरप्रदोऽपि नहुषो हुण्डेन मायाविना
तत्पोतं हृतमाशु हन्तुमजितो योऽरक्षदार्तिं विना ॥
पित्रोर्योगमकारयच्च जयिना तेनेष्टदोऽसावलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ११ ॥
भ्रात्राऽजौ विजितो विचित्रचरितस्वाप्यार्पितश्रोत्रक–
श्रालर्कः शरणं यमाप कृपया साष्टाङ्गयोगं सवित् ॥
तस्मै येन मदालसासुत उपादिष्टो वरिष्ठोऽमलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ १२ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीदत्तात्रेयस्तोत्रं सम्पूर्णम् ॥

१२१ पद्यम् ( चाल जम्का अजब तडाका० )

भगवन् भक्तिरसं देहि स्याद्धन्यो येन न देही ॥ ध्रु० ॥
सकामधर्मं हृद्यापि नेच्छोऽनर्थकरेऽस्मिन् तुच्छे ।
निराश्रयदेऽनिरहतनावीव स्वार्थं को वाऽन्विच्छेत् ॥ १ ॥
अर्थेहमगवद्धजनविघ्नकृम्प्रियते कर्मण्यपि मे ।
सद्धानादरस्त्वद्भजनादर परास्तु नाऽन्येच्छा मे ॥ २ ॥
ननु स्वधर्मत्यागे भजतां कृतार्थता चेदिष्टा ।
येन यदि वाऽतो भ्रश्येद्वाऽपक्वः किं स न साधु ॥ ३ ॥
न भक्तिरसिकोऽनर्थं याति क्वापि समर्थः ।
भक्तिवासनासद्भाग्यात्तो हीनोऽपि भजेत्स्वार्थं ॥ ४ ॥
भजतो जन्मान्तरेऽप्यमद्रं नीचगतो लभेत्किं ।
स्वधर्मनिरतो न चेद्भक्तो भद्रं क्वापि लभेत्किं ॥ ५ ॥
यद्यपि धर्मादुपरि सुखं स्यात्तद्व्ययरतो व्यर्थः ।
सुखानि दैवाद् दुःखानीवाऽऽयान्ति क्वापि समर्थ ॥ ६ ॥
यद्धोलभ्यं योग्यमलभ्यं तदेव देव प्रेष्ठ ।
त्वत्पद्भजनं अनिमृतिर्भजनं मे देहमरप्रेष्ठ ॥ ७ ॥

१२२ पद्यम् ( चाल–जमका अजब तडका० )

भगवन्निर्विकार ईश त्वमसि सदोदित विगताश ॥ ध्रु० ॥
अपरोक्षस्त्वं निरुपमामः प्राणिस्त्वं कथमीश ॥
स्वयंज्योतिस्त्वमतो विकृतिर्नहि तव भवदपनाश ॥ १ ॥
मलिनो योऽसौ मल्क्षालनाच्छुद्धो विशति पावीश ॥
अज्ञानमलाऽस्पृष्टोऽस्यनराऽहस्ते विकृतिः क्वेश ॥ २ ॥

यो हि जायते सचोत्पत्तिना विक्रियते जगदीश ॥
त्वं तु सदाऽजस्तवाधोऽक्षज निकार उत्पत्तित ईश ॥ ३ ॥
आगमगेयस्त्वमप्रमेय· कथं घटेत त्रीश ॥
ज्ञानलक्षणाऽतिशयाधानात्संस्कारस्तव धीश ॥ ४ ॥
त्वं देशाद्यैरपरिच्छिन्नो महानुभूतिर्व्रीश ॥
अरितस्त्वाद्या विकृतिरविद्या कृता न तेऽस्ति परेश ॥५ ॥
त्वमेक एवाद्वितीय एवाखिलानुभूतिः स्वेश ॥
विकारहेतोरभावतोऽतो न ते विकारोधीश ॥ ६ ॥
श्रुतिविषयस्य स्वयं प्रभायं तूक्तिविरामेधीश ॥
स्वदीपिता वाङ्मुखाश्चरति वृत्तिव्याप्ति· सुमतेश ॥ ७ ॥
(अस्य श्लोकः भागवते)
एष स्वयंज्योतिरजाप्रमेयो महानुभूतिः स्वकलानुभूतिः ॥
एकोऽद्वितीयो वचसा विरामे येनेषिता वागसवश्चरन्ति ॥ १ ॥

---

## १२३ दत्तात्रेयस्तोत्रम् ॥

निर्मलं निश्चल स्वातं निशांतं यस्य संततम् ॥
दय वीतरज उत्कृष्टमेशांतं दायितं मतम् ॥ १ ॥
स सर्वात्मापि सर्वेशः सर्वभूतगुहाशयः ॥
नि यंता सर्वभूताना सर्वशक्तिसमन्वितः ॥ २ ॥
प्रि यश्चात्मवतां नित्यं दत्तात्रेयो जगद्गुरुः ।
यो गेश्वरो योगिपूज्यो भक्तानां कल्पपादपः ॥ ३ ॥
वि श्वरूपधरो विश्वविहारी विजिताहितः ॥
ज न्ममृत्युजराव्याधिभयदोषनिवारणः ॥ ४ ॥
य तिसंन्यासिसुगतिः सर्वारिष्टनिवारणः ॥
तं जसां तेज आत्मायं सदा ध्येयो मुमुक्षुभिः ॥ ५ ॥

## १२४ पद्यम् ( चालः सुंदरमुख तुंदिल० )

अत्रिपुत्र मेऽत्र पुत्र ईश कुत्र भो ॥ चित्तमंत्र चित्रमत्र दर्शितं प्रभो ॥ध्रु०॥
पूर्वजनुषि करय रत्नमपहृतं मया । दृढिपक्तिरिह विनष्टिरहाते यया ॥
शर्मकराऽधर्महराऽलं परीक्षया ॥ (चाल) ॥ श्रीमन् धीमन् भूमन् जय भगवन् तवमहिमन् सुतधामन् त्राहि मां विभो ॥ १ ॥
परिह्वरयाधामपरयदोषमर्पितः ॥ खलु परया वै दयया सद्गुणः सुतः ॥
केन चाद्य सोऽनघय कुत्र परिहृतः ॥ (चाल) ॥ त्वरया परया घृणया दर्शय तं दत्त सुतं भगवंतं त्वार्चये विभो ॥ २ ॥ अत्रिपुत्र० ॥

---

## १२५ पद्यम् ( चाल–साध्य नसे मुनि कन्या० )

भज भज भगवत्कायं ॥ तं विप्रं हापितमायं ॥ ध्रु० ॥
समाधिमिध्यै क्लेशविहत्यै कृतक्रियो यो विप्रः ॥
कर्माशयहत्तापाऽतापकृन्मूलोत्पाटनविप्र ॥ १ ॥
सुदमपि दुःखं पश्यत्यार्अहितत्यर्वाऽर्यनिसंस्थः ॥
विप्रो देवः साक्षादेव प्रभुः स किमुपरिस्थः ॥ २ ॥
अभ्यासहताऽविद्या ये तानर्चत नित्यं हि यतः ॥
यदि ते कुपिता अप्यविभ्रान्ता भ्रान्ति मानातीताः ॥ ३ ॥

---

## १२६ नरसिंहसरस्वतीस्तोत्रम्

विजयते जयते जय ते यतेविहतमो हतमोहतमो नमः ॥
हृदिकदाय पदाय सदा यदा तदुदयोनदयो न वियोनयः ॥ १ ॥
उदयते नयतेर्नयतेर्यदा मनसि कामनिकामगतिस्तदा ॥
पदुदयो हृदयोकसि ते सिते भवति योवति योगिवराश्वरान् ॥ २ ॥

भवति भावभवोद्भवो यदा भवति कामनिकामहतिस्तदा ॥
भवति मानव मानवदुत्तमे भवतिरोधिरतो विरतोत्तमे ॥ ३ ॥
तव सता वसता मनसा नसा प्रपदयो पदयोरजसाजसा ॥
सुसहित सहितस्तव तावता यदरतारतता जनताविता ॥ ४ ॥
कृतकृत सु विहाय विहायसा समम न मजवामज तामसात् ॥
मिलति तारकमन्त्र यमजसत् पदरजो भ्रमहारिमहारिसत् ॥ ५ ॥
तदजरामरशोशविलक्षण सदजधीगुणनेतृकलक्षणम् ॥
भुवनहेत्वघहृत्त्रिपुराधिक तव न जातु पद सुपुराधिकम् ॥ ६ ॥
त्रिविधभेदपर समदश्यते विविधवेदपर क्मदश्यते ॥
पदमिय यदुनिदूघनबुद्धिया सदनिद प्रजहात्यघनुद्धिया ॥ ७ ॥
अज नमो जनमोहनमोहन प्रिय नियोजय ते नयते नदे ॥
य इह वेद निवेद निवदवे त्यज पद जपद तपद पदम् ॥ ८ ॥

इति श्री प प श्रीवासुदेवान दसरस्वतीविरचित
नरसिंहसरस्वतीस्तोत्र सपूर्ण ॥

## १२७ श्रीदत्तात्रेयाष्टोत्तरशतनामस्तोत्रम् ॥

ॐ अनसूयासुतोऽमत आद्य आत्रेय आत्मद ॥
इडापतिरिलेशार्च्य ईश ईडितसद्गुण ॥ १ ॥
उन्मत्त उत्तमयशा ऊर्ध्वदूर्ध्वगतिप्रिय ॥
ऋणहर्ता ऋषिश्रेष्ठो ऋवचो ऋजशिक्षक ॥ २ ॥
लृस्थरयो लृगतिदो लृवचो लृपुर सर ॥
एष्यदिष्ट एकार्य ऐकात्म्यप्र ऐक्यदृक् ॥ ३ ॥
ओंकारवाच्य ओजोद औदासीन्यद औषध ॥
अहर्याश चरणपा अध्यात्मनिजहृन्मल ॥ ४ ॥



## १२८ दत्तभजनम्

( दत्तपुराणान्तर्गतप्रत्यध्यायतात्पर्यम् )

वेदपादस्तुततोषित दत्त १. श्रावितशास्त्रविरोधक दत्त २. संमतवेदशिरोमत दत्त ३. संपृष्टेश्वरसत्क्रिय दत्त ४. कर्मेंद्रतत्वज्ञापक दत्त ५ स्मृतित. सन्निधिकारक दत्त, सह्यमहीधरवासिन्दत्त, काशीगंगास्नायिन्दत्त, कमलापत्तनभिक्षुकदत्त, शांडिल्यानुग्राहक दत्त ६. योगाष्टांगज्ञेश्वर दत्त ७. योगफलाभिज्ञेश्वर दत्त ८. शिक्षितपातजलप्रद दत्त ९. अर्पितसायुज्यामृत दत्त १०. विक्षेपावृतिवर्जित दत्त, असंग अक्रिय अविकृत दत्त, स्वाश्रयज्ञानत्युद्बोधक दत्त, स्वैकांशाहितविश्वक दत्त, जीवेश्वरतास्वीकृतदत्त, त्र्यधिसमष्ट्यंतर्गतदत्त, गुणतो रूपत्रयधरदत्त, नानाकर्मगतिप्रदद्दत्त ११. स्वभक्तमायानाशक दत्त १२. अनसूयाभ्याह्लादक दत्त १३. मत्स्याद्यवतारात्मक दत्त १४. प्रल्हादानुग्राहक दत्त. असुरसुरोपगशिक्षक दत्त १५. ज्ञानकाहसंदर्शक दत्त, १६ नवविधभक्तिपरायणदत्त, स्वमंत्रजापकतारक दत्त १७. योगभ्रष्टद्विजनुतदत्त, सतीमाहात्म्यप्रमुदित दत्त, सत्यनसूयात्यर्भक दत्त १८. कृतवीर्यानुग्राहक दत्त १९. जंभाख्यासुरघातक दत्त, देवेंद्राभीष्टार्पक दत्त, अर्जुनहृद्यवरप्रदद्दत्त २०. मोक्षेच्छ्वर्जुनसंस्तुत दत्त, शिल्पज्ञोद्गतिशासक दत्त, कामशास्त्रविज्ञापक दत्त, सप्तमहर्विद्रावक दत्त २१. विष्णुदत्तवरदायक दत्त २२. कर्मविपाकख्यापक दत्त, क्षुद्रिंगपीडाहारक दत्त २३. भीतप्राज्ञाल्हादक दत्त २४. श्रवणादिविधिद्योतक दत्त २५. सयोगविज्ञानार्पक दत्त २६. विमुक्तचर्याजल्पक दत्त २७. शक्तभक्तहितयोजक दत्त २८. भार्गवरामाल्हादक दत्त २९. अर्जुनसायुज्यप्रद दत्त ३०. रेणुकाभीष्टार्थप्रद दत्त ३१. पातितभपकर्दंभक दत्त ३२. ऋतध्वजानुग्राहक दत्त ३३. मदालसानुग्राहकदत्त ३४. अलर्कराज्यो-

त्कर्षकदत्त ३५. अलर्कराज्यत्याजकदत्त ३६. योगसिद्धिसंदर्शकदत्त ३७ योगसुचर्याभापकदत्त ३८. मृत्युलक्ष्मसंजल्पकदत्त ३९. अलर्कगीतोत्तमगुणदत्त, विहिताळर्कनृपाश्रयदत्त ४०. आयुराजवरप्रददत्त ४१.नहुषाशेषाशिष्टदत्त ४२. आयु शोकद्रावकदत्त, इंदुमतीहृदुर्पकदत्त ४३. प्रकटितनहुषसुतेजोदत्त, घातितहुंडासुरबलदत्त, आयुर्लिप्सापूरक दत्त ४४. यदुराजानुग्राहक दत्त, बहुगुरुतत्त्वग्राहकदत्त, श्रीयदुवंशाल्हादकदत्त ४५. मन्वंतरसत्कीर्तिगदत्त, सप्तद्वीपक्ष्माप्रियदत्त ४६. दिनकरवंशोत्कर्षदत्त ४७. हिमकरवंशोद्धारकदत्त, पूरितभक्तमनोरथदत्त, उपासनाकांडप्रियदत्त ४८. देहार्थाऽव्योव्दोधक दत्त, शरीरदोषादर्शकदत्त, तनुसाफल्यप्रबोधकश्च, ऋग्भीकतपथाख्यापकदत्त, भाषितसुंदासुरमृतदत्त ४९. जल्पितवेदत्रयोत्तमगतदत्त, अभिहितविदसुतवुर्गत दत्त ५०. नानाधर्मद्योतकदत्त ५१. निषेधविधिसंदर्शकदत्त ५२. वैष्णवधर्मादर्शकदत्त ५३. सन्माहात्म्यद्योतकदत्त ५४. माघस्नानख्यापकदत्त ५५. भाषितराक्षसमोचनदत्त, सुकृतोऽस्तुकजनरोचकदत्त ५६. सोमकीर्तिनृपतारकदत्त, अधर्मसाध्वसहारकदत्त, वर्णाश्रमपुपकारकदत्त, ब्रह्मचारिपुप्रबोधकदत्त ५७. गृहस्थधर्मद्योतकदत्त ५८. श्राद्धसपद्धतिदर्शकदत्त ५९ दर्शितसत्तिथिनिर्णयदत्त ६०. कृतदुष्कर्मविनिर्णयदत्त, प्रायश्चित्तस्थापकदत्त ६१. कर्मविपाकज्ञापकदत्त ६२. सत्संसारद्योतकदत्त, वनस्थतप आदर्शकदत्त ६३. पंचप्रलयासंगतदत्त, संमतसंन्यासाश्रमदत्त ६४.

---

## १२९ दत्तस्तवस्तोत्रम्

भूतप्रेतपिशाचाद्या यस्य स्मरणमात्रतः॥
दूरादेव पलायंते दत्तात्रेयं नमामि तम् ॥ १ ॥

यन्नामस्मरणाद्दैन्यं पापं तापश्च नश्यति ॥
भीतिग्रहार्तिदुःस्वप्नं दत्तात्रेयं नमामि तम् ॥ २ ॥
दद्रुस्फोटककुष्ठादि महामारी विषूचिका ॥
नश्यंत्यन्येऽपि रोगाश्च दत्तात्रेयं नमामि तम् ॥ ३ ॥
संगजा देशकालोत्था अपि सांक्रमिका गदाः ॥
शाम्यंति यत्स्मरणतो दत्तात्रेयं नमामि तम् ॥ ४ ॥
सर्पवृश्चिकदष्टानां विषार्तानां शरीरिणाम् ॥
यन्नाम शांतिदं शीघ्रं दत्तात्रेयं नमामि तम् ॥ ५ ॥
त्रिविधोत्पातशमनं विविधारिष्टनाशनम् ॥
यन्नाम क्रूरभीतिघ्नं दत्तात्रेयं नमामि तम् ॥ ६ ॥
वैर्यादिकृतमंत्रादिप्रयोगा यस्य कीर्तनात् ॥
नश्यंति देवबाधाश्च दत्तात्रेयं नमामि तम् ॥ ७ ॥
यच्छिष्यस्मरणात्सद्यो गतनष्टादि लभ्यते ॥
य ईशः सर्वतस्त्राता दत्तात्रेयं नमामि तम् ॥ ८ ॥
जयलाभयशःकामदातुर्दत्तस्य यः स्तवं ॥
भोगमोक्षप्रदस्येमं पठेद्दत्तप्रियो भवेत् ॥ ९ ॥

इति. श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
दत्तस्तवस्तोत्रं संपूर्णम्

---

## १३० पंचमाष्टकस्थालर्ककृतस्तोत्रम्

वन्दे देवं देवात्मानं सच्चिद्रूपं सर्वात्मानं ॥
विश्वाधारं मुन्याकारं स्वेच्छाचारं वाग्दूरम् ॥ १ ॥
विश्वोपाध्या यो भवेशोऽविद्योपाध्याप्यस्मानीशः ॥
सत्वज्ञानान्मायानाशे तत्रैकस्त्वं नेशोऽनीशः ॥ २ ॥

रज्ज्वज्ञानात्सर्पस्तत्र भ्रान्त्या भातीशैवं ह्यत्र ॥
जीवभ्रान्तिस्त्वेषा मिथ्या सा मेऽद्यारं नष्टाऽऽप्तोक्त्या ॥३॥
धन्योऽस्म्यद्य त्वद्दृक्पूतो जातोऽस्म्यद्य ब्रह्मीभूतः ॥
त्वं ब्रह्मेशासीशारूपो मायायोगान्नानारूपः ॥ ४ ॥
दत्तात्रेयः प्रज्ञामेयो वेदैर्गेयो योगिध्येयः ॥
त्वं विश्वात्मा कस्त्वामीशः स्तोतुं ध्यातुं ज्ञातुं वेशः ॥ ५ ॥
वृद्धः क्वापि प्रौढः क्वापि बालः क्वापि मत्तः क्वापि ॥
अंशी भोगी रागी क्वापि त्यागी योगी संगी क्वापि ॥ ६ ॥
स त्वं बुद्धः सिद्धः शुद्धः श्रद्धाबद्धोऽप्यन्याविद्धः ॥
श्रीशो मायाधीशो धीशो विज्ञानेशो निर्वाणेशः ॥ ७ ॥
धर्माधर्मातीतो गीतो वेदैर्भेदैर्हीनोऽनूनः ॥
त्वां तं संतं भक्त्या मुक्त्या ईशं श्रीशं वन्दे वन्दे ॥ ८ ॥

---

## १२१ चतुर्थाष्टकस्थार्जुनकृतस्तोत्रम्

मोहतमो मम नष्टं त्वद्वचनाद्धृदि कष्टम् ॥
शिष्टमिदं मयि दृष्टं हृत्परमात्मनि तुष्टम् ॥ १ ॥
ज्ञानरविर्हृदि भातः स्वावरणाख्यतमोऽतः ॥
क्वापि गतं भवदीशासौ खलु काममदीशा ॥ २ ॥
क्लेशरुजां हरणेन त्वच्चरणस्मरणेन ॥
अस्मि कृतार्थ इहेश श्रीश परेश महेश ॥ ३ ॥
श्रेयदुपं तव पादं को न भजेदविवादं ॥
दैववशाद्धृदि ध्येयं दर्शितवानसि मे यं ॥ ४ ॥
चित्रमिदं सदमेयः सोप्यभवद्धृदि मेयः ॥
देवसुरर्षिसुगेयः सोऽद्य कथं मम हेयः ॥ ५ ॥

आश्रिततापहरं तं पातकदैन्यहरं तम् ॥
नौमि शिवं भगवंतं पादमहं तव संतम् ॥ ६ ॥
यत्र जगद्भ्रम एषः कल्पित एव सशेषः ॥
भ्रान्तिलयेऽद्वय एवावेदि मयाद्य स एव ॥ ७ ॥
शान्तिपदं तव पादं स्वार्थदमाद्यमनंतम् ॥
नौमि शिवं भगवन्तं ह्यपितकामघनं तम् ॥ ८ ॥
देवोऽभावो शुद्धः सिद्धः सत्यो नित्यो बुद्धः शुद्धः ॥
सर्वोपूर्वो हर्ता कर्ताऽभिन्नस्त्वं नः पाता माता ॥ ९ ॥

---

## १३२ अथ वेदपादस्तुतिः

अग्निमीळे परं देवं यज्ञस्य त्वां त्र्यधीश्वरम् ॥
स्तोमोऽयमग्रियोऽध्यस्ते हृदिस्पृगस्तु शन्तमः ॥ १ ॥
अयं देवाय दूराय गिरां स्वाध्याय सात्वनाम् ॥
स्तोमोऽस्त्वनेन विन्देयं तद्विष्णोः परमं पदम् ॥ २ ॥
एता या लौकिकाः सन्तु हीना वाचोऽपि नः प्रियाः ॥
बालस्येव पितुष्टे त्वं स नो मृळ महाँ असि ॥ ३ ॥
अयं वां नात्मनोस्तत्त्वमधिगम्यास्ति दुर्मनाः ॥
हृद्रोगं मम सूर्य त्वं हरिमाणं च नाशय ॥ ४ ॥
प्रभग्महेऽस्मान्विद्धीति स्तोतारस्ते वयं नमः ॥
भगवो देव ते स्तोममारे अस्मे च शृण्वते ॥ ५ ॥
इन्द्रो मदाय यातीह सत्वरं सोमिनो यथा ॥
स्तोतॄंनेहि तथाऽस्माँस्ते माध्वीर्गावो भवन्तु नः ॥ ६ ॥
द्वे विरूपेऽत्र मायायाऽस्तेऽत्र मग्नोऽस्मि पीडितः ॥
माभितः सन्तपन्तीह सपत्नीरिव पर्शवः ॥ ७ ॥

इदं श्रेष्ठमपि प्राप्य जन्म गन्ताघ एव तत् ॥
कुरु प्रसादं ज्ञात्वैतत्तेनाहं भूरि चाकन ॥ ८ ॥

प्रवरतुज्ञानाज्जहावि निष्कामश्चेन्मृतिं त्वहम् ॥
न तादृशोऽतः कामादि सर्वं रक्षो निर्ग्रहय ॥ ९ ॥

सुषुमामूर्धिय स्तोमैरागच्छेते वयं विभो ॥
त्वदंशास्तत्वं पतिर्नोऽसि देवो देवेषु मेधिरः ॥ १० ॥

यस्य रूपं रूपमिह प्रतिरूपोऽसि नो पृथक् ॥
गतानि भूतानि त्रिदुर्ब्राह्मणा ये मनीषिणः ॥ ११ ॥

तं नु त्वा किं क्षुपेऽल्पज्ञो भगवन्तं क्षमस्व भोः ॥
ओपमागहि मां त्वं चेत्सत्या सन्नतिमन्यसे ॥ १२ ॥

हा वासना घ्नन्ति यथा वृश्चिकस्यारसं विषम् ॥
अतो मा पाहि भूयिष्ठां नम उक्तिं विधेम ते ॥ १३ ॥

नि होता सीदसि विभो यस्त्वं यष्टुगृहे प्रिय ॥
स त्वा हुवे ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते ॥ १४ ॥

सेमामविड्ढिप्रभृतिमीशिषे योऽव मानिशम् ॥
त्वं विश्वेषा यदीशानो ब्रह्मणा वेपि मे हवम् ॥ १५ ॥

मन्दः स्वर्तोऽयं दीनोऽस्त इति विद्वान्भयात्प्रभुः ॥
इन्द्र आशाभ्य परि मां सर्वाभ्यो अभयं करत् ॥ १६ ॥

प्र य आरपितां भ्रान्ति त्वत्प्रसादाज्जहाति सः ॥
विमुच्यते तद्विप्रास्त्वां आशुवांसः समिन्धते ॥ १७ ॥

इच्छन्ति देवा अपि ते प्रसादाय नृजन्म तत् ॥
विद्माग्रामानि ते दत्त विश्वाभिर्गीर्भिरीमहे ॥ १८ ॥

इन्द्र त्वा भजतः मृत्युर्दुर्लभं किं स्यामि नु ॥
भक्त्या हेमाद्रि ते नाशा गंभीरो उदधीरिव ॥ १९ ॥

न सा रोद्धुं धियः शक्ता योगेनाऽपि ततः सदा ॥
त्रातारं धीमहीश त्वां धियो यो नः प्रचोदयात् ॥ २० ॥

वैश्वानराय इत्याग्ने विधिलब्धं महैव ते ॥
भवामो भजने भक्त्या अस्माकं श्रुणुधी हवम् ॥ २१ ॥

एषा त्वामिन्द्र विप्रासो जागृवांसो विपन्यवः ॥
स्तुवन्त्येभ्यो हि ते कोऽपि न आर्यो अस्ति वृत्रहन् ॥२२॥

मत्तभुग्भ्यो गृणद्भ्यस्ते मर्त्येभ्योऽप्यमृतत्वमिन् ॥
इत्त स्मृत्वा तव मनोरथ आयातु पाजसा ॥ २३ ॥

इदमुन्यद्रिपं श्रेयो यज्ञभ्या परितृप्यति ॥
साधुस्तवकूजनं तेऽस्मै इयं स्तोतृभ्य आभर ॥ २४ ॥

त्वामग्ने मायिनं मायां जेतारमपराजितम् ॥
हित्वा कं शरणं यामः सनो बोधि श्रुधी हवम् ॥ २५ ॥

महो महेशोऽज्ञानेन मवानयतु मातृवम् ॥
यथा वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः ॥ २६ ॥

प्रयक्षतो यदात्मानं मनीषा मनसा सह ॥
तदैव भवतैरग्ने जानता संगमेमहि ॥ २७ ॥

ऋतस्य गोपास्त्वं देहि मह्यं शं युञ्जते धियः ॥
भीताय नाधमानाय ऋषये सप्तवध्रये ॥ २८ ॥

त्वं हि पाताऽसि नो दत्त परिबाधस्व दुष्कृतम् ॥
कामादीन्यस्य धीमानि जहि रक्षांसि सुक्रतो ॥ २९ ॥

पिबा सोममिति श्रुत्वा यष्टहूतिं शुभं द्रवन् ॥
आयासि पुरुरूप त्वमाशु गोपूपपृच्यताम् ॥ ३० ॥

इन्द्रे चोतान्यं न पृथङ् मन्ये मायाभिरिन्द्रवान् ॥
पुरुरूप इतीशे स्वयमित्रौ सुषहान्कृधि ॥ ३१ ॥
यज्ञा यज्ञाधीश सर्वे त्वन्मया अपि तेषु नः ॥
जपयज्ञो मतस्तेन सम्नु पूष्णा गमेमहि ॥ ३२ ॥
स्तुवे नराप्यं तुष्टः सन्नथो यस्या अयोमुखम् ॥
मायां जित्वा भवान्तां मे विश्वाहा शर्म यच्छतु ॥ ३३ ॥
जुषस्व स्तोममीशैते प्रियासः सन्तु सूरयः ॥
वयं स्तोम प्रियानेन यच्छा नः शर्म दीर्घश्रुत् ॥ ३४ ॥
उमौ अक्षे मृत्युरयमदुग्धा इव धेनवः ॥
धियो मेऽनेनेट्गीश न जातो न जनिष्यते ॥ ३५ ॥
प्रब्रह्मैहीदमाकर्ण्योर्वारुकमिव बन्धनात् ॥
मृत्युं जय प्रमादाख्यान्मृत्योर्मुक्षीय माऽमृतात् ॥ ३६ ॥
यदद्य वर्ष्मे ते नैव पश्येम शरदः शतम् ॥
स्तोत्राय ते हते मृत्यौ जीवेम शरदः शतम् ॥ ३७ ॥
मरुत्तमं महेशं त्वां मनामह इहागहि ॥
मृळा सुक्षत्र मृळय मा नो दुःशंस ईशत ॥ ३८ ॥
तिस्रो वाचस्तेऽत्र वरां क ईशानं न याचिषत् ॥
भक्त्या गृणीमस्त्वां स्तोत्रैस्तेभिर्न स्तूयमानाहि ॥ ३९ ॥
दूराद्विहाय सर्वं त्वामृषयो ये च तुष्टुवुः ॥
मर्ता अमर्त्यस्य ते वद्भूरि नाम मनामहे ॥ ४० ॥
य इन्द्र त्वं यो नमसा स्वध्वरो छीति संस्तुतः ॥
इन्द्रो महेन्द्र ऋषिरित्युपब्रह्माणि नः शृणु ॥ ४१ ॥
वयमु त्वा वरं देवमस्मभ्यं शर्म सप्रथः ॥
मनामहे पूर्णतं यदमित्याभिन्द्र नोनुमः ॥ ४२ ॥

प्रकृतान्यपि सूक्तानि शृण्वन्तं जातवेदसम् ॥
त्वां गृणन्ति न के त्वं हि येषामिन्द्रो युवा सखा ॥ ४३ ॥
त्वावतः पाहि नो मर्त्यान्यत इन्द्र भयामहे ॥
आदिश्य पद्भक्तिं ते ततो नो अभयं कृधि ॥ ४४ ॥
आत्वा रथं न तुरगैः स्तोत्रैस्त्वा वर्तयामसि ॥
स त्वं न इन्द्र मृळय यस्य ते स्वादु सख्यमित् ॥ ४५ ॥
आ प्रयोधं मघोऽयोघः स्वप्नवद्दुःस्वदोऽशुचिः ॥
सतितान् दुःखितान्नृन्नः पाहि त्वं शृणुधी गिरः ॥ ४६ ॥
इन्द्राय साम ते गातु न अमो नाम ते गृणे ॥
बण्महाँऽअसि सूर्य त्वं सत्रादेव महाँऽअसि ॥ ४७ ॥
सोमः पुनानोंऽतरामो मया त्वं नाधिरक्षितः ॥
ईक्षे तुच्छान्यहिर्भोगान्योषा जारमिव प्रियम् ॥ ४८ ॥
प्रण इन्दोऽपि स्मेरं रूपं ते दर्शयामलम् ॥
नृन्स्तोतॄन्पाह्यंहसो नो जहि रक्षांसि सुक्रतो ॥ ४९ ॥
हिन्वन्ति द्वैतमस्त्यस्माद्भयं विन्दति मामिह ॥
यदन्ति दूरके यच्च पवमान वि तज्जहि ॥ ५० ॥
धर्ता कारकशक्तीनां सर्वेषां त्वमिहैक इत् ॥
यशोऽग्रेदं पवित्रं ते वितत ब्रह्मणस्पते ॥ ५१ ॥
असर्जि भवता विश्वमनित्यमवशं बृहत् ॥
त्वं संस्मर ह्य शरण वत्सं जातं न धेनवः ॥ ५२ ॥
पुरोजितीश मो भुमन्तत्र माममृतं कृधि ॥
यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ॥ ५३ ॥
अयं स इति विद्वान्सन्यमाय घृतवद्धविः ॥
कुतो जुहोम्यतोऽदेवा यमाय जुहुता हविः ॥ ५४ ॥

निवर्तध्वमितो देवा भद्रं नो अपि वातय ॥
मनो हरे मां पाह्यार्तं पिता पुत्रमिव प्रियम् ॥ ५५ ॥
प्रमा प्रमाता प्रमेयं त्रिपुटीह न विद्यते ॥
रूपं तेऽविकृतं सत्वं मधुमन्ये परायणम् ॥ ५६ ॥
प्रहोताचोऽत्रैव मनोन्वाहुवामह इच्यतः ॥
शमादि मनसो नास्य यो यज्ञस्य प्रसाधनः ॥ ५७ ॥
ये यज्ञेनार्थन्त्यनेन सर्वे नन्दंति ते त्वया ॥
नान्येऽतस्त्वप्रिया एव विरूपासो दिवस्परि ॥ ५८ ॥
देवानां नु वशे योऽस्य सुमङ्गलीरियं वधूः ॥
स्नेहेषु त्वच्युतो भोगी पतिर्बन्धेषु बध्यते ॥ ५९ ॥
विहितं सर्वमिचे त्वमतो ज्यायांश्च पूरुषः ॥
पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि ॥ ६० ॥
इमे जाये इति वदन्त्या सालावृकहृत्समा ॥
तन्मयो न स भेदासुमात्मानं तव पूरुष ॥ ६१ ॥
इमा उपाधितोऽत्रैकः पाकेव मनसान्वितः ॥
त्वां यदीक्षेत तं माता रेह्लि स उ रेह्लि मातरम् ॥ ६२ ॥
तदिदात्मन्हृदि वपुः पश्यन्तस्ते मनीषया ॥
मुनयो वातरशनाः पिशङ्गा वसतेऽमलाः ॥ ६३ ॥
त्वं चिन्मयं बुधा रूपं संजानाना उपासते ॥
यो अस्य पारे रजसः [illegible] नः पर्षदतिद्विषः ॥ ६४ ॥
इमे त्वोर्जे चौदनेन नित्यहोमेऽपि नव्यतः ॥
यजन्त्यहं स्वकामस्त्वां श्रेष्ठतमाय कर्मणे ॥ ६५ ॥
अग्न आयाहीति गातुं त्वाऽक्षमः स्तौमि केवलम् ॥
निषीद मे हृदि यथा निहोता सत्सि बर्हिषि ॥ ६६ ॥

शं नो देवीः प्रसादाद्वाचे संतु धीरृचयोऽनिशम् ॥
आत्मप्रवाहा स्वारस्यान्छ्रेयोरभिस्रवन्तु नः ॥ ६७ ॥

ज्ञातेऽस्मिन्याशमुक्तिः सकलविदिति तत्स्यादनिर्देश्यमेकम् ।
सूक्ष्मं चातीन्द्रियं सच्चदयमिति गिरा शाब्दनिर्देश्यमेव ॥
वाक्यैस्तत्त्वं विरोधेऽपि सति सुमतिभिःसोऽयमित्यादिवत्तद्–
भागत्यागेन लक्ष्यं सद्गुरुकृपया लभ्यमैक्यं हि तज्ज्ञैः ॥ ६८ ॥

इति श्री. प. प. वासुदेवानंदसरस्वतीविरचिता
श्रीदत्तपुराणान्तर्गतवेदपादस्तुतिः संपूर्णा ॥

---

## १३२ मंत्रात्मकश्लोकाः॥

अनसूयात्रिसंभूतो दत्तात्रेयो दिगंबरः ॥
स्मर्तृगामी स्वभक्तानामुद्धर्ता भव संकटात् ॥ १ ॥
दरिद्रविप्रगेहे यः शाकं भुक्त्वोत्तमश्रियं ॥
ददौ श्रीदत्तदेवः स दारिद्र्यान्छ्रीप्रदोऽवतु ॥ २ ॥
दूरीकृत्य पिशाचार्तिं जीवयित्वा मृतं सुतम् ॥
योऽभूदभीष्टदः पातु स नः संतानवृद्धिकृत् ॥ ३ ॥
जीवयामास भर्तारं मृतं सत्या हि मृत्युहा ॥
मृत्युंजयः स योगींद्रः सौभाग्यं मे प्रयच्छतु ॥ ४ ॥
अत्रेरात्मप्रदानेन यो मुक्तो भगवानृणात् ॥
दत्तात्रेयं तमीशानं नमामि ऋणमुक्तये ॥ ५ ॥
जपेच्छ्लोकमिमं देवपितृर्षिपुंनृणापहं ॥
सोऽनृणो दत्तकृपया परंब्रह्माधिगच्छति ॥ ६ ॥
अत्रिपुत्रो महातेजा दत्तात्रेयो महामुनिः ॥
तस्य स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥ ७ ॥

नमस्ते भगवन्देव दत्तात्रेय जगत्प्रभो
सर्वबाधाप्रशमनं कुरु शांतिं प्रयच्छ मे ॥ ८ ॥
अनसूयासुत श्रीश जनपातकनाशन ॥
दिगंबर नमो नित्यं तुभ्यं मे वरदो भव ॥ ९ ॥
श्रीविष्णोरवतारोऽयं दत्तात्रेयो दिगंबरः ॥
मालाकमंडलुच्छूलडमरुशङ्खचक्रधृक् ॥ १० ॥
नमस्ते शारदे देवि सरस्वति मतिप्रदे ॥
वस त्वं मम जिह्वाग्रे सर्वविद्याप्रदा भव ॥ ११ ॥

दत्तात्रेयं प्रपद्ये शरणमनुदिनं दीनबंधुं मुकुंदम्
नैर्गुण्ये संनिविष्टं पथि परमपदं बोधयंतं मुनीनाम् ॥
भस्माभ्यक्तं जटाभिः सुललितमुकुटं दिक्पटं दिव्यरूपं
सह्याद्रौ नित्यवासं प्रमुदितममलं सद्गुरुं पावशीलम् ॥१२ ॥

## १३४ श्रीनृसिंहसरस्वतीस्तोत्रं ॥

कोट्यर्कभं कोटिसुचंद्रशांतं विश्वाश्रयं देवगणार्चितांघ्रिं ॥
भक्तप्रियं त्वात्रिसुतं वरेण्यं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ १ ॥
मायातमोर्कं त्रिगुणं गुणाढ्यं श्रीवल्लभं स्वीकृतभिक्षुवेषं ॥
सद्भक्तसेव्यं वरदं वरिष्ठं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ २ ॥
कामादिषण्मत्तगजांकुशं त्वामानंदकंदं परतत्त्वरूपम् ॥
सद्धर्मगुप्त्यै विधृतावतारं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ ३ ॥
सूर्येंदुगुं सज्जनकामधेनुं भूपोदपंचात्मकविश्वमस्मात् ॥
उदेति यस्मिन्नमतेस्तमेति वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ ४ ॥
रक्ताञ्जपद्मायतकांतनेत्रं सद्दंडकुंडीपरिहारपिताङ्घ्रि ॥
मितस्मितज्योत्स्नमुखेंदुशोभं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥५॥

नित्यं त्रयीमृग्यपदाब्जधूलिं निनादसद्बिंदुकलास्वरूपम् ॥
त्रितापकल्पाग्निविकल्पवृक्षं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ ६ ॥

दैन्यादिमोकष्टद्वाभिमीड्यं योगाष्टकज्ञानसमर्पणोत्कं ॥
कृष्णानदीपंचसरिद्युतिस्थं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ ७ ॥

स्तोत्रे क्व ते मेऽस्त्युरुगायशक्तिस्तुतुमुंस्तो वै विमुखोऽस्म जातः ॥
स्तुवन्द्विजिह्वोभवदीरयन्त्वां वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ ८ ॥

श्रीनृसिंहसरस्वतीस्तोत्र संपूर्णम् ॥

---

## १३५ श्रीनृसिंहसरस्वतीस्तोत्रं

प्राग्ब्रह्मा त्वमजोऽक्रियोऽपि बहुलं स्यामित्यभूद्धीस्तया
सृष्ट्वैवांडमुखं ततो जगदिदं सृष्टं सधर्मं गुणैः ॥
रवेः स्वं भो रमयन्विहंसि सदरीननावतीर्यानिशम्
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ १ ॥

कल्याकृष्टहृदुज्झितक्रतुनरत्रस्ताध्वराशीर्मुदे
प्रातः सूर्य इवोदितोऽस्यज महामोहांधकारं ग्रसन् ॥
सद्धर्माश्रमसेतुमत्र शिथिलप्रायं सुदार्ढ्यं नयन्
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ २ ॥

सर्वानंदनिधानरूपममलं सं त्वं सुखं मूर्तिमत्
प्रादुष्कृत्य जनांतरमृगक्रीडावनं पावनम् ॥
संसारावटमग्नमुद्धरसि भो स्वीकृत्य तुर्याश्रमं
वंदे श्रीनृहरे सरस्वति वर ते श्रीपदाब्जद्वयम् ॥ ३ ॥

मूके गां दृशमंधके सुतनयं वंध्यासु चामून्मृते
सौभाग्यं विधवासु पङ्गुरमहो दत्तं सुशुल्कंघने ॥
एवंभूत इयान्तवैव महिमा त्रैलोक्यसंस्थाक्षमो
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ४ ॥

मुक्तावास मुमुक्षुकल्पविटपिन्मो कामिनां कामधुक्
दारिद्र्यानलमेघ दुष्कृतदवाग्ने तापिताराम ते ॥
श्रुत्यन्विष्टरजः पदं श्रुतविवादातीततत्त्वं महद्
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ५ ॥

भो योगीश्वर भावितं तव पदं तीर्थाश्रयं सज्जना-
जीवं कामिसुदैवतं च कमलालीलास्थलं निर्मलं ॥
विद्वद्वादकरंडकं सुकृतसंस्थानं महत्पावनम्
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ६ ॥

वेदागोचर ते पवित्रममलं शक्तोऽत्र कः कृत्स्नशो
वक्तुं पञ्चविनेंदुमुखपञ्चनात्मेतीह मूर्त्यष्टकम् ॥
एतद्विश्वमयं च नान्यदिह वा ॐकाररूपेगित-
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ७ ॥

कुंडीदंडकरं प्रशांतममलं संन्यासिरूपं तव
श्रीभीमामरजायुतिस्थितमजं ध्येयं शरण्यं मयि ॥
ज्ञानं तारकमीश सत्यमनिशं ब्रह्मन्स्थिरधीर्वंदे
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ८ ॥

श्रीनृसिंहसरस्वतीस्तोत्रं संपूर्णम् ॥

---

## १३६ मानसपूजा

परानंदमयो विष्णुर्हृत्स्थो वेद्योप्यतींद्रियः ॥
सदा संपूज्यते भक्तैर्भगवान्भक्तिभावनः ॥ १ ॥
अचिंत्यस्य कुतो ध्यानं कूटस्थाऽऽवाहनं कुतः ॥
क्वासनं विश्वसंस्थस्य पाद्यं पूतात्मनः कुतः ॥ २ ॥
क्वानर्घोरुक्रमस्यार्घ्यं विष्णोराचमनं कुतः ॥
निर्मलस्य कुतः स्नानं क्व निरावरणेऽम्बरम् ॥ ३ ॥
स्वसूत्रस्य कुतः सूत्रं निर्लेपस्य च लेपनम् ॥
निस्तृपः सुमनोभिः किं किमक्लेद्यस्य धूपतः ॥ ४ ॥
स्वप्रकाशस्य दीपैः किं किं भक्ष्याद्यैर्जगद्भृतः ॥
किं देयं परितृप्तस्य विराजः क्व प्रदक्षिणाः ॥ ५ ॥
किमनंतस्य नतिभिः स्तौति को वाग्गोचरम् ॥
अंतर्बहिः प्रपूर्णस्य कथमुद्वासनं भवेत् ॥ ६ ॥
सर्वतोपीत्यसंभाव्यो भाव्यते भक्तिभावनः ॥
सेव्यसेवकभावेन भक्तैर्लीलात्तविग्रहः ॥ ७ ॥
तथेशातींद्रियस्यापि पारंपर्यश्रुतां तनुम् ॥
प्रकल्प्यास्मादावयंति प्रार्चयेऽर्चां मनोमयीम् ॥ ८ ॥
कलसुश्लोकगीतेन भगवन्दत्त जागृहि ॥
भक्तवत्सल सामीप्यं कुरु मे मानसार्चने ॥ ९ ॥
श्रीदत्तं खेचरीमुद्रामुद्रितं योगिसद्गुरुम् ॥
सिद्धासनस्थं ध्यायेऽभीवरप्रदकरं हरिम् ॥ १० ॥
दत्तात्रेयाह्वयाम्यत्र परिवारैः सहार्चने ॥
श्रद्धाभक्त्येश्वरागच्छ ध्यातधामन्नंजसा विभो ॥ ११ ॥

सौवर्णं रत्नजडितं कल्पितं देवतामयम् ॥
रम्यं सिंहासनं दत्त तत्रोपविश्य यंत्रिते ॥ १२ ॥

पाद्यं चंदनकर्पूरसुरभि स्वादु वारि ते ॥
गृहाण कल्पितं तेन दत्तांघ्री क्षालयामि ते ॥ १३ ॥

गंधाब्जतुलसीबिल्वशमीपत्राक्षतान्वितम् ॥
सांब्वर्घ्यं स्वर्णपात्रेण कल्पितं दत्त गृह्यताम् ॥ १४ ॥

सुस्वाद्वाचमनीयांबु हैमपात्रेण कल्पितम् ॥
तुभ्यमाचम्यतां दत्त मधुपर्कं गृहाण च ॥ १५ ॥

पुष्पवासितसत्तैलमंगेष्वालिप्य दत्त भोः ॥
पंचामृतैश्च गंगाद्भिः स्नानं ते कल्पयाम्यहम् ॥ १६ ॥

भक्त्या दिगंबराचांत जलेदं दत्त कल्पितम् ॥
काषायपरिधानं तद् गृहाणैणेयचर्म च ॥ १७ ॥

नानासूत्रधरैते ते ब्रह्मसूत्रे प्रकल्पिते ॥
गृहाण दैवतमये श्रीदत्त नवतन्तुके ॥ १८ ॥

भूतिमृत्स्नामुकस्तूरीकेशरान्वितचंदनम् ॥
रत्नाक्षताः कल्पितास्त्वामलंकुर्वेथ दत्त तैः ॥ १९ ॥

सच्छमीबिल्वतुलसीपत्रैः सौगंधिकैः सुमैः ॥
मनसा कल्पितैर्नानाविधैर्दत्तार्चयाम्यहम् ॥ २० ॥

लाक्षासिताभ्रश्रीवासश्रीखंडागुरुगुग्गुलैः ॥
युक्तोऽग्नियोजितो धूपो हृदा स्वीकुरु दत्त तम् ॥ २१ ॥

स्वर्णपात्रे गोघृताक्तवर्तिप्रज्वलितं हृदा ॥
दीपं दत्त सकर्पूरं गृहाण स्वप्रकाशक ॥ २२ ॥

सषड्रसं षड्विधान्नं नैवेद्यं गन्धसंयुतम् ॥
कल्पितं हैमपात्रे ते भुंक्ष्व दत्तांबुदः पिब ॥ २३ ॥
प्रक्षाल्यास्यं करौ चाद्भिर्दत्वाचम्य प्रगृह्यताम् ॥
तांबूलं दक्षिणां हैमीं कल्पितानि फलानि च ॥ २४ ॥
नीराज्य रत्नदीपैस्त्वां प्रणम्य मनसा च ते ॥
परितस्त्वत्कथोद्घोषैः कुर्वे दत्त प्रदक्षिणाः ॥ २५ ॥
मंत्रवन्निहितो मूर्ध्नि दत्त ते कुसुमांजलिः ॥
कल्पयंते मनस' गीतवाद्यनृत्योपचारकाः ॥ २६ ॥
प्रेर्यमाणप्रेरकेण त्वया दत्तेरितेन ते ॥
कृतेयं मनसा पूजा श्रीमंस्तुष्टो भवानया ॥ २७ ॥
दत्त मानसतल्पे मे सुखनिद्रां रहः कुरु ॥
रम्ये व्यायतमपत्यामतूलिकाढ्ये सुधीजिते ॥ २८ ॥
इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचिता
श्रीदत्तात्रेयमानसपूजा संपूर्णा ॥

---

## १३७ श्रीदत्तात्रेयापराधक्षमापनस्तोत्रम् ॥

रसज्ञा यदा तार्क्ष्यं स्वादु लभ्यं गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ १ ॥
वियोन्यंतरे दैवदार्ढ्याद्विभो प्राग्गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ २ ॥
मया मातृगर्भस्थितिप्राप्तकष्टाद्गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ३ ॥
मया जातमात्रेण संमोहितेन गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ४ ॥

मया क्रीडनासक्तचित्तेन बाल्ये गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ५ ॥
मया यौवनेऽज्ञानतो भोगतोषाद्गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ६ ॥
मया स्थाविरेऽनिघ्नसर्वेंद्रियेण गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ७ ॥
हृषीकेश मे वाङ्मनःकायजातं हरेऽज्ञानतो ज्ञानतो विश्वसाक्षिन् ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ८ ॥
स्मृतो ध्यात आवाहितोऽस्यर्चितो नो न गीतः स्तुतो वंदितो नो न जप्तः ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ९ ॥
दयाब्धिर्भवादृङ् न सागाध मादृग्भवत्यात्मतोमेवान्ये शरण्यः ॥
यथार्हं ऽकनं भूर्हि भूनिःस्तुतांघ्रेरिति प्रार्थितं दत्तशिष्येण सारं ॥ १० ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तात्रेयापराधक्षमापनस्तोत्रं संपूर्णम् ॥

---

## १३८ दकारादिदत्तात्रेयाष्टोत्तरशतनामस्तोत्रम्

दत्तं वंदे दशातीतं दयाब्धिं दहनं दमम् ॥
दक्षं दरघ्नं दस्युघ्नं दर्शं दर्पहरं दवम् ॥ १ ॥
दातारं दारुणं दान्तं दास्यादं दानतोषणम् ॥
दानं दानप्रियं दावं दासत्रं दारवर्जितम् ॥ २ ॥
दिक्पं दिवसपं दिक्स्थं दिव्ययोगं दिगंबरम् ॥
दिव्यं दिष्टं दिनं दिश्यं दिव्यांगं दितिजार्चितम् ॥ ३ ॥

दीनपं दीधितिं दीप्तं दीर्घं दीप्तं च दीप्तगुम् ॥
दीनसेव्यं दीनबंधुं दीक्षादं दीक्षितोत्तमम् ॥ ४ ॥
दुर्ज्ञेयं दुर्ग्रहं दुर्गं दुर्गेशं दुःखभंजनम् ॥
दुष्टघ्नं दुग्धपं दुःखं दुर्वासोग्र्यं दुरासदम् ॥ ५ ॥
दूतं दूतप्रियं दूष्यं दूष्यत्रं दूरदर्शिपम् ॥
दूरं दूरतरं दूर्वाभं दूरांगं च दूरगम् ॥ ६ ॥
देवार्च्यं देवपं देवं देयज्ञं देवतोत्तमम् ॥
देवज्ञं देहिनं देशं देशिकं देहिजीवनम् ॥ ७ ॥
दैन्यं दैन्यहरं दैवं दैन्यदं दैविकांतकम् ॥
दैत्यघ्नं दैवतं दैव्यं दैवज्ञं देहिकार्तिदम् ॥ ८ ॥
दोषघ्नं दोषदं दोषं दोषित्रं दोर्द्वयान्वितम् ॥
दोषज्ञं दोहपं दोषेट्बंधुं दोग्धं च दोहदम् ॥ ९ ॥
दौरात्म्यघ्नं दौर्मनस्यहरं दौर्भाग्यमोचनम् ॥
दौष्ट्यत्रं दौष्कुल्यदोषहरं दौर्हृद्यभंजनम् ॥ १० ॥
दंडज्ञं दंडिनं दंडं दंभघ्नं दंभिशासनम् ॥
दंतास्यं दंतुरं दंशिघ्नं दंदशज्ञं च दंदम् ॥ ११ ॥
अनंतानंतनामानि संति तेऽनंतविक्रम ॥
वेद्मोऽपि चकितो यत्र नुर्वाग्हृद्दूरका कथा ॥ १२ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
दकारादिदत्तात्रेयाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

सधुमुतविधवा मा भर्तुकामा प्रदोष-
व्रतकथनत ईशम्नात्रिवर्त्याष्टमेऽन्त्यान् ॥
स विबुधमकरोत्तञ्च जन्मान्तरेऽस्याः
सुत इह भविता दिङ्मालिनी यस्य कीर्तिः ॥ ८ ॥

आख्यानकीर्तिश्रुतितोऽस्य मुक्ति-
र्भवान्तरेऽसौ रजकाय राज्यम् ॥
द्वारवन्तिगोऽभून्नवमेऽत्र कृष्णा-
तटेऽपि संपूरयति स्वतृष्णाम् ॥ ९ ॥

पथि तस्करघातितभक्तं सार्थमजीवयदेत्य चिरस्य ॥
विनिहत्य च सान्दजमे श्रीपादुवियेगवती गतिरस्य ॥ १० ॥

एकादशे नृहरिसंज्ञक आस सोऽस्या-
पुत्रः प्रदोषफलदः प्रणवं पठिष्यन् ॥
श्रुत्वाप्यशक्यश्रुतिगणानुपनीत उच्च-
रुद्घर्षणी स्वजननीं बहुधा करिष्यन् ॥ ११ ॥

माणवस्त्राक्रीडितकृद्द्वादश आश्वास्य विभुः ॥
मातरमेत्य च काशीं न्यास्यभवत्स निराशीः ॥ १२ ॥

प्रसूमुखैर्जनिभुवि सङ्गतः स्वकेभ्यो दशेऽनुगयुगुपेत्य गौतमी ॥
मृतोत्सुकं जठरगार्तमुद्धरन्न्यदर्शयद् भुवि रुचिरां प्रसूर्गविम् ॥ १३ ॥

सायंदेवं शक्रमिताध्याय उवाच
श्रीशो म्लेच्छं याहि न भीस्ते ॥ तथेति ॥
गत्वा भीतम्लेच्छनृपेणार्चित एष
नृत्यन् रेजे मत्तमयूरो हि यथा सः ॥ १४ ॥

चित्रपदोक्तिर ईशस्तीर्थगमाय स शिष्यान् ॥
पञ्चदशे कथयित्वा तद्विधिमीरयदेव ॥ १५ ॥

षोडशे गुरुरथोद्धृतात्मने धौम्यशिष्यचरितोपदेशवः ॥
ब्राह्मणाय विदमर्पयद् गुरुद्रोहिणेऽलमनुतप्तचेतसे ॥ १६ ॥

आर्याक्षमानितोऽदादार्यायै मूढविप्र इह जिह्वां ॥
सप्तदशे तत्प्रेरित ईशमवाप्यालमत्ततो जिह्वाम् ॥ १७ ॥

भिक्षार्थं गत्वा कुसुमितलतायेष्टितद्वारदेशं
गेहं विप्रस्य प्रभुरतिदरिद्रस्य भुक्त्वापि शाकम् ॥
छित्वा वल्लीं स्ववसतिमगात्तल्लतामूलदेशे
लेभेऽर्थौघं द्विजवर इहाष्टादशे चाशिषोऽपि ॥ १८ ॥

अमरापुर ऊनविंशकेऽनुगगङ्गानुजया शतुंबरे ॥
वरदे स निधाय पादुके गुरुराश्वास्य च योगिनीरगात् ॥१९॥

प्रेतार्तिहताऽमौं दत्तो मृत एकः ।
वर्ण्योपतदंबां विंशे ततुमध्याम् ॥ २० ॥

विद्युन्मालावत्संबन्धं पुत्रादेः सन् चोक्त्वा बोधम् ॥
सार्धं चक्रे जीवंवेतं सैके विंशेऽसौ तत्पोवम् ॥ २१ ॥

गन्धर्वं प्राप्य भोगामरदुहितृसुतिं भिक्षार्थमथ गुरु-
र्गत्वा दीनद्विजौको गतरदमहिषीं वंध्यां अरवहाम् ॥
दृष्ट्वा दुग्धं ययाचे तदनु सुवदना स्त्रीः क्षीरमदुह-
द् द्वाविंशे ऽदात्पयोऽस्मै तदु वरदगुरुः पीत्वागमदसौ ॥ २२ ॥

राद् त्रयोविंश आकर्ण्य सत्तयतः सन्निर्णी स्वां पुरीमानयचद्वशः ॥
श्रीगुरू रक्षसेऽदाद्वृतिं राजवद्राजदत्ते मठे विषयामोऽवसत् ॥ २३ ॥

निन्दापर्र्यतिविप्रिविक्रमं प्राप्य श्रीगुरुराश्वदर्शयत् ॥
सैन्यं न्यासिवपुः क्षणं चतुर्विंशे यानगराजवद्विराद् ॥२४॥

मत्तावाप्तौ श्रुतिनयविज्ञौ म्लेच्छाद्याप्तौ द्विजविजिगीषू ॥
भिक्षुर्निन्ये श्रितशिबिकौ तौ गुर्वर्ग्यं पंचसहितविंशे ॥ २५ ॥

चित्रपदोक्तिभिरीशः षड्युतविंश उवाच ॥
वेदतदङ्गविशारदा यं प्रणमन्ति हि लेखाः ॥ २६ ॥

अपि क इह यदीक्षणादपराजिता॰ स वृकुडवदनाच्छ्रुतीः समवाचयत् ॥
अमयद्रुममिते द्विजो च पिशाचतां सुगतिमथ गतौ च तौ द्विषद्वहः ॥ २७ ॥

अकथयदसावष्टाविंशे स्वकर्मविपाकतो
विविधकुगतिं हीनत्वाप्तिं सचिह्नपुनर्भवम् ॥
तदघहतये प्रायश्चित्तं च कृच्छ्रजपादिकं
पतितमकरोद् भूयोऽक्षं सा मनोहरिणी कथा ॥ २८ ॥

नवद्वययुते नतेन मुनिना स पृष्टोऽवदत्
विभूतिमहिमानमानतपदाखपायावदत् ॥
कुमारहरवादमप्यथ स वामदेवो ददौ
गतिं भसितधारणेन विधिवद्य पृथ्वीधरः ॥ २९ ॥

गोपीनाथोऽत्रिसुतभजनात्पुत्रमापोद्वहोऽर्वं
तस्त्री कृष्णं तमनयदथो पत्तनं गाणगात्वम् ॥
मन्दाक्रान्ताऽजनि स तु पुरस्थोपकण्ठं ममार
त्रिंशे तत्स्त्रीनिकटमथ गतो भूतिरुद्राक्षभृत्सन् ॥३०॥

स्त्रीधर्ममुवाच कुपूर्मितेऽध्याये धिषणोक्तमुपस्थितम् ॥
विन्ध्याद्रिचरित्रसमन्वितात्ऽगस्त्यविसतीचरितं च सन् ॥३१॥

रुक्मवतीमूचे प्रणतां वामष्टयुता सौभाग्यवती स्या॰ ॥
प्रेतमपि द्वात्रिंश इहात्या वल्लममाशूत्थापयदीशः ॥ ३२ ॥

भुजगशिशुमृता नीता कुलयुगिह पुराम्न्याढ्ये ॥
स्वपुरमपि सती वेश्या तत इह विकपी भूपौ ॥ ३३ ॥
घृतकरपुटराजप्रार्थितर्षिः सुतमृतिहृतये रुद्राभिषेकम् ॥
श्रुतिपुरमितसर्गेकारयद्राट्तनयमुत मृतितोजीवयद्द्राक् ॥ ३४ ॥
सुरहितदकुचकथा घृत्वा शरपुरमित इह सोमाख्यं ॥
व्रतमपि यत इह सीमंतिन्यलभदपि च दयितं नष्टम् ॥ ३५ ॥
तर्कपूर्युजि हलमुखी स्त्री सुशिक्षणमिपत ईद् ॥
आह्निकाचरणमवदच्छाक्त्यसंमतमु सुधिये ॥ ३६ ॥
प्रमिताक्षरोक्तिगुरुराह सुचिरसुरपूजनादिसकलाह्निकवित् ॥
अन्नदानादिधर्मशयनादिविधिः स्वरपूर्मितेऽत्र हृतभक्तविधिः ॥ ३७ ॥
त्रिलोकपर्याप्तकृतोदनेन संभोजिता विप्रसुता अनेन ॥
अष्टत्रियुक्ते ह्युपजातयोऽपि भक्ताय दत्तो गुरुणा वरोऽपि ॥ ३८ ॥
नवत्रिमितसर्गे व्यधात्सधविरवन्ध्यां ॥
कुमारललितां पिप्पलार्चनत ईशः ॥ ३९ ॥
खयुगमितेऽत्र कुष्ठविनिवृत्यै नरहरयेऽवदत्सामिदर्चां ॥
तदु विटपी द्विजश्च शुचिरासीदियमजकीर्तिरश्वमालिनी ॥ ४० ॥
अवदृदिह परीक्ष्य सायंदेवं कुयुगमिते भगवान्गुरुरुरुलब्ध्यै ॥
विधिजमुपगतः सुपुष्पिताग्रागमवन आर्यं उवाच काशियात्राम् ॥ ४१ ॥
वाचोर्मीतार्द्धयुग्माढ्ये स सर्गे शिष्टां यात्रां कथयन्दर्शयित्वा ॥
काशीं दारादिनुतक्ष्मानयित्वा सायंदेव गुरुराह प्रतं सन् ॥ ४२ ॥
सायंदेवाय त्रियुगपरिमितेऽध्याये प्राहेशोऽनंतव्रतमिह च पत्रेष्टम् ॥
यस्याचीर्णेन व्यपगतदुरितो यायात्कौण्डिण्यः पार्थश्च सुगतिमिवो-
संधाधाम् ॥ ४३ ॥

क्षणत श्रुतिवेदसंमितेऽस्मिन्ननयद्यतिराज एकरूप ॥
श्चयगमात्मरत स ततुक घानयदाशु निवेद्य रा ट्चान्निम् ॥४४॥

यद्धीरासीद्भमरविलसिता नद्यवोक्त्या क्षुरगुपशमघी ॥
प्राप्येश द्राक्स शुचिकनिरमूद् गुर्वाक्षावोऽक्षयुगमित इह॥४५॥
त दपेरय स श्चान्द ईशा रसकृतयुक्त इहार्चिनमप्रथम् ॥
ारिद्समभूद्दुसमस्या मकपद्दस्य फवि स च शिष्य ॥ ४६ ॥

दीपावल्या समार्थित सप्तशिष्यै
सप्तग्रामान्तःक्षेत्रसरथोऽप्यगात्स ॥
अष्टास्मा मूत्रा सप्तवेदाढ्यसर्गे
लोके यन्मूर्तिर्विश्रुता यैश्वदेवी ॥ ४७ ॥

क्षत्र गुरूक्तवदशोपमपकथान्य
विच्छेद शूद्र वपगा विनिवारयन्तीम् ॥
सिंहोन्नताक्ष इव चात्मवधू निवार्य
ऐभेऽमितर्धिमिभवेदयुजीशभक्त्या ॥ ४८ ॥

घर्गैकवाक्समित इन्द्रवसारे पोपमाघक्षतिकृद्धागिन्या ॥
तत्क्षेत्रमाहात्म्यमुवाच सोऽष्टतीर्थानि चाद्दर्शयदत्र सभ्य ॥४९॥

दशायुते पुरोक्तरमक्षोभवद्यवनराज आस यूपकृन्
पृथुपिटकरवदङ्क चदितस्तदीयशमष्ट्रिडो नृपकथाम् ॥
अवददयो ययौ गुरु स्मृति प्रथमजन्मनोऽलभदथो
गतरुगसौ सुयानगमज गजाश्वरक्षित पुर स्वमनयत् ॥ ५० ॥

राजपुरादेत्य च नीजपीठ कीर्तिरभून्मम सुशुचिरतन्वी
स्थेयमिहात परमिह न साक्षादित्यवनीपुयुजि स च विषार्य॥
स्वानपि चाश्वास्य बहुवरदानै पुष्पकृतासनगत इदमाह
मद्भजनाद्ध सुगतिरिह तिष्ठे सत्यमितीदरमभवददश्च ॥५१॥

